# श्रीबोधिसत्त्वचरितम्

( श्लोकसहस्रात्मकं महाकाव्यम् )

प्रणेता—

सत्यव्रतः शास्त्री

व्याकरणाचार्यः, एम. ए. एम. ओ. एल, पी. एच. डी

देहलीविश्वविद्यालये संस्कृतप्राध्यापकः

दिल्ली

संवत् २०१७

(मूल्य रूप्यकचतुष्टयम्)

# निवेदना

अथ बोधिसत्त्वचरितं नामेदं काव्यं महात्मनो बोधिसत्त्वस्य पूर्वजन्मकथानकान्याश्रित्य प्रवृत्तम्। बोधिसत्त्वो हि भगवतः सुगतस्यैव पूर्वावस्था। अयमेव भगवान् तासु तासु योनिषु बहुधाऽजायत, लोकसङ्ग्रहे च निरन्तरमरंस्त। यदाऽस्य बोधोऽजनि तदैव बुद्ध इत्यस्य संज्ञा पप्रथे। ततः प्राक् तु बोधिसत्त्व इति पूर्वबुद्ध इति वाऽस्य संज्ञा बभूव। बोधिसत्त्वश्च यद्यदुदात्तमचारीत्तस्य सर्वस्यावदानजातस्य न्यक्षेण वर्णनं पालिजातकेषूपलभ्यते। पालिमजानतां संस्कृतज्ञानामपि तत्सुलभं स्यादिति प्रकृतो मे यत्नः। अत्र कतिपयान्येव रुचिरतराणि जातकान्युपन्यस्तानि।

अस्य काव्यस्य प्रथम. सर्गो "व्यापारी बोधिसत्त्व" इति नाम्ना साहित्यअकादमीतः प्रकाश्यमानायाः संस्कृतपत्रिकायाः 'संस्कृतप्रतिभायाः' प्रथमवर्षभवे प्रथमेऽङ्के प्रकाशितोऽभूत्। आशासे तत्सम्पादका मान्यवराः पण्डितपुरोगमा डा० राघवन्महाभागास्तस्यात्रानुमुद्रणमनुमंस्यन्त इति।

इह काव्ये क्वचित्प्रदेशेपु बोधिसत्त्वशब्दस्य स्थाने बुद्धशब्दः प्रयोगमवतीर्णः। स छन्दोवशाल्लाघवाद्वाऽऽश्रित इति विदाङ्कुर्वन्तु सन्तः। अपि वा भाविनीं संज्ञामाश्रित्य बिल्वादो लम्बचूड इतिवद् व्याख्येयः। क्वचित्क्वचित्पदमध्येऽनुनासिकस्थानेऽनुस्वारनिवेशोऽपि मुद्रणसौकर्यानुरोधादेव संश्रित इति नात्र दोषं ग्रहीष्यन्ति गुणगृह्या विपश्चितः।

एकादशसु सर्गेषु विभक्तमिदं श्लोकसहस्रात्मकं महाकाव्यम्। बृहत्कलेवरेऽस्मिन् ग्रन्थे स्युर्नाम काचित्काः प्रमादास्ते खलु गच्छतः स्खलनन्यायेन स्वयमेव सुधीभिः समाधातव्याः।

पदवाक्यप्रमाणज्ञान् पण्डिततल्लजान् पितृचरणांश्चारुदेवशास्त्रिण इतिगुरुभिरभिहितनामधेयांश्चिरमुपसन्नोऽहं यान् कानपि विद्याकणान् समचैषं तत्परिणतिरेवेयं कृतिरिति कृतज्ञताभरावनतमूर्धो मे परः परितोषः।

सदसद्विवेचनचणा विचक्षणा मदीयामिमां कृतिं कृपार्द्रकृपावेन सम्भावयिष्यन्ति गुणदोषांश्च परिच्छिद्य मामनुग्रहीष्यन्तीति प्रार्थयमानो विरमति—

विनीतः—
सत्यव्रत.शास्त्री
देहलीस्थः।

ज्येष्ठशुक्लचतुर्दशी २०१७

## समर्पणम्

*दिल्लीविश्वविद्यालयसंस्कृतविभागाध्यक्षेभ्यः*
*पुण्यश्लोकेभ्यः सर्वतन्त्रस्वतन्त्रेभ्यो*
*विदुषां धुरि कीर्तनीयेभ्यो माननीय*
**डाक्टर श्री नरेन्द्रनाथ चौधरी**
*महाभागेभ्यः सादरं समर्प्यते*
*कृतिरियं विनीतेन*
*सत्यव्रतेन ।*

अथ

# श्रीबोधिसत्त्वचरितम्

## प्रथमः सर्गः

(उपजातिवृत्तम्)

शास्तेति नाम्ना प्रथितो महात्मा बुद्धः प्रबुद्धो जनताहिताय ।
प्राग्जन्मवृत्तान्तकथास्तदीयाः गीर्वाणवाण्येह समुद्गिरामि ॥१॥

काश्यां पुरा राज्यमलङ्करिष्णुः श्रीब्रह्मदत्तो नृपतिर्बभूव ।
सम्यक्प्रजापालनशिक्षणाद्यैः ख्यातिं गतो यः किल सद्गुणौघैः ॥ २॥

प्रशासतस्तस्य भुवं यथावत् पश्चापि भूतानि शिवं वितेनुः ।
ब्रह्मेव सृष्टेरधिपः प्रजानां रराज राजा स उदारकीर्तिः ॥ ३ ॥

वाराणसी तस्य पुरी प्रसिद्धा बभौ भृशं लोचनलोभनीया ।
अदभ्रमभ्रंलिहमास्त यस्यां गृहे गृहे वैभवमद्वितीयम् ॥ ४ ॥

श्रीबोधिसत्त्वो भगवान् महात्मा तत्रैव विड्वेश्मनि जन्म लेभे ।
यस्योदये सर्वदिशः प्रसेदुर्ववुः सुखा गन्धवहाश्च भूयः ॥५॥

स वर्धमानोऽर्यगृहे वपुष्मान् क्रमेण लोकव्यवहारदृश्वा ।
युवा कुमारः प्रतिबुद्धतत्त्वः श्रीबोधिसत्त्वो हि विराजते स्म ॥६॥

बहूनि वर्षाणि यदा व्यतीयुर्व्यापारमारब्धवतः सतोऽस्य ।
स्वजीविकालाभमुदीक्षमाणः सुधीरसावित्थमवालुलोचत् ॥७॥

दूरप्रदेशे गमनं विधाय क्रियेत वाणिज्यमिदं मया चेत् ।
स्याद् भूयसी द्रव्यविशेषसिद्धिर्लभ्येत देशाटनजं च सौख्यम् ॥८॥

इत्येव वित्तोपचयाभ्युपायं विचार्य पण्यानि समग्रहीत्सः ।
शनैः पुनः पञ्चभिरुक्षयानैराराद्ध्रुवं गन्तुमियेष देशम् ॥ ९ ॥

सार्थेन साकं महता यदासौ प्रस्थातुकामोऽभवदर्थमीप्सुः ।
तदैव कश्चिद् वणिगात्मजोऽन्यो यानैः शतैः पञ्चभिरेतुमैच्छत् ॥ १० ॥

महार्हवस्तून्यहमाददीयेत्यभून्मतिः सार्थयुतस्य तस्य ।
सङ्गृह्य पण्य विविधं स यत्नाद् इष्टार्थलाभाय यियासुरासीत् ॥ ११ ॥

समं प्रयास्यन्तममुं विलोक्य व्यचिन्तयत् तत्र स बोधिसत्त्वः ।
सार्ध मयैवायमपि व्रजिष्यन् यात्रान्तरायो भवितेति मन्ये ॥१२॥

न वर्त्म पर्याप्तमिदं सहैव द्वयस्य यात्रार्थमसम्भवित्वात् ।
संबाधमार्गेण कथं सहस्राण्येष्यन्ति यानानि निराकुलानि ॥ १३ ॥

विधीयते चेद् युगपत् प्रयाणं कदापि नादो भवति प्रमाणम् ।
पन्था ह्यणीयान् सुगमो न जातु भूयान् कथं यात्रिगणः प्रयातु ॥१४॥

भोज्यं जनानां यवसं वृषाणां समं प्रयाणेन विमर्दितं स्यात् ।
भवेन्न किञ्चित् सुखमात्मनीनं जलान्नकाष्ठादिकमाकुलीस्यात् ॥ १५ ॥

एवं विविञ्चन् स सदात्तबुद्धिः तमर्थमर्योक्तिजमाबभाषे ।
विधीयतामार्य ! विचार्य कार्य यात्रा न सत्रात्र हिताय नौ स्यात् ॥ १६ ॥

न संभवो नौ युगपत्प्रयाणे मार्गस्य सङ्कोचितयेति जाने ।
दृष्टा मयेह प्रतिपत्तिरिष्टा या तामहं त्वामपि सूचयामि ॥ १७ ॥

भवान् पुरस्ताद् व्रजतु प्रकामं यायामह वेति विविङ्ग्धि बन्धो ! ।
त्व वेहि पश्चादथवाहमेमि क्रमेण यानेऽस्ति न कोऽपि दोषः ॥ १८ ॥

वणिक्सुतो विप्रतिपन्नचेताः तद् युक्तियुक्तं वचनं निशम्य ।
विचारयामास पुरः प्रयाणे लाभो महीयांस्तु भविष्यतीति ॥ १९ ॥

यातास्मि वर्त्माऽप्रहतं सुखेन प्राप्तास्मि पत्राण्यविमर्दितानि ।
अत्स्यन्त्यनुच्छिष्टतृणं वृषा मे स्वच्छं यथेच्छं सलिलं च लप्स्ये ॥ २० ॥

पण्यस्य मूल्यं प्रथमं ग्रहीष्ये स्वेच्छानुकूल क्रयविक्रयेण ।
पूर्वं गतोऽहं ननु बोधिसत्त्वात् लाभान्वितः स्यामिति निश्चिनोमि ॥२१॥

इत्थं विनिश्चित्य वणिक्तनूजः स बोधिसत्त्वं गिरमुज्जगार ।
पुरो गमिष्याम्यहमेव नूनं द्रव्यं यतो मे भविता ह्यनूनम् ॥ २२ ॥

निपीय भूयो वचनं तदीयं श्रीबोधिसत्त्वस्त्वचिचिन्तदेवम् ।
यायात् पुरस्तादयमेव तावत् मया तु पश्चाद् गमनीयमेव ॥ ॥ २३ ॥

लाभः परस्ताद्गमनेऽस्ति भूयान् न खेदमत्रानुभवामि किञ्चित् ।
वाटाः समाः स्युर्विकटा अटव्यां पुरा प्रयातुः शकटीभिरस्य ॥ २४ ॥

अपिच्छिला सत्यविसंष्ठुलैवं स्पष्टा भविष्यत्यखिला धरित्री ।
उक्ष्णां नृणां चङ्क्रमणैर्निघृष्टो भवेदनुद्घातसुखश्च पन्थाः ॥ २५ ॥

शष्पाणि चात्स्यन्ति कठोरशुष्काण्यग्रेसरास्तस्य वृषाश्च्युतानि ।
पश्चाद्गता मे वृषभास्तु नूत्नान्यास्वादयिष्यन्ति मृदूनि तानि ॥ २६ ॥

छिन्नप्ररूढानि नवानि पत्राण्याप्स्याम्यभीष्टानि च शाकहेतोः ।
आस्वाद्यमाधुर्यमयं त्वलभ्यं तोयं तदुत्खातमहं लभेय ॥ २७ ॥

मया स्वयं प्राण्युपघाततुल्यं निर्धारणीयं न च वस्तुमूल्यम् ।
एतद्विनिर्दिष्टमथास्थितोऽहं कर्तास्मि निश्चिन्ततया पणायाम् ॥ २८ ॥

इत्याद्यनेकानुपलक्ष्य लाभान् स बोधिसत्त्वो वणिजं न्यगादीत् ।
अहं प्रसीदामितमां निकामं त्वमच्छ गच्छेह यथेच्छमग्रे ॥ २९ ॥

वणिक् तथास्त्वित्यभिधाय सद्यः संनह्य गन्त्रीर्नगराच्चचाल ।
देशाच्च देशे पणनं स कुर्वन् क्रमेण गत्वा मरुभूमिमाप ॥ ३० ॥

मरुस्थलीं तामविलङ्घ्य नासौ गन्तुं प्रदेशान्तरमर्हति स्म ।
दृष्ट्वैव कान्तारभुवं वितोयां प्रभूतभूताध्युषितामदुःख्यत् ॥ ३१ ॥

कान्तारसंज्ञा निबिडाः प्रदेशाः कष्टप्रदत्वाद् विविधा भवन्ति ।
पाटच्चरैः केचन हिंस्रजीवैरन्ये च भूतैः कृतसंनिवेशाः ॥ ३२ ॥

सन्तीदृशा. केऽपि च भूमिभागाः जलस्य लेशोऽपि न यत्र लभ्यः ।
भोज्यस्य तत्रास्ति कथैव का वा प्रजापतेः सृष्टिरियं विचित्रा ।। ३३ ।।

अलभ्यभोज्यान्नजलं प्रदेशं सुविस्तृतं षष्टिषु योजनेषु ।
विशंकटं तत्र ससंकटं तं निशाम्य वैश्यः स्थितिमाततान ।। ३४ ।।

स्थूलेष्वनेकेषु महत्सु तूर्णं यथेष्टमापूर्य जल घटेषु ।
तोयस्य खाद्यस्य कृतव्यवस्थः ततः स कान्तारमुवं विवेश ।। ३५ ।।

निरन्तर प्रान्तरमन्तरा यन् यदा स मध्येपदवि प्रपेदे ।
तदा तदा तत्र कृताधिवासाः प्रेताः समेता बहवोऽन्तरायन् ।। ३६ ।।

दुरासदैः सोपधिभि. समस्तैरुपेत्य तैर्दैत्यगणैरचिन्ति ।
केनाप्युपायेन वणिक्तनूज विमोह्य खादेम वयं मुदेति ।। ३७ ।।

प्रभ्रंशयामो जलपूर्णकुम्भानेतानशेषान् यदि वैश्यसूनोः ।
तृष्णक् तदायं सलिल विनैव सामर्थ्यहीनो भविताऽचिरेण ।। ३८ ।।

न चैव शक्ष्यत्यभियातुमग्रे पश्चादल स्यान्न निवर्तितु वा ।
तदास्मदायत्ततयाऽऽशु खाद्यो भवेदय युक्ततमोऽभ्युपायः ।। ३९ ।।

विचिन्त्य दैत्याधिपतिर्यथोक्तं मायाविधाने बहुशः पटीयान् ।
श्वेतान् महोक्षान् रमणीययानेष्वायोजयामास तदा स्वकीयान् ।। ४० ।।

तूणीरचर्मेष्वसनासिमुख्यान्यादत्त पश्चापि स आयुधानि ।
मिथ्याजलक्लेदितकेशचैलो ललास नीलोत्पलमालभारी ।। ४१ ।।

पङ्कोपलिप्तानि च यानचक्राण्यसावकार्षीत् कपटप्रवीणः ।
सर्वं व्यवस्थाप्य रथस्थितः सन् राजेव वैश्यं प्रति सप्रतस्थे ।। ४२ ।।

तद्भृत्यवर्गोऽपि तथाऽऽर्द्रवासा. क्लिन्नालकः शुक्लसरोजमाली ।
पङ्कोदबिन्दून् विसृजन्नुपायात् मृणालमूलं रसयन्नुपायात् ।। ४३ ।।

सकैतवं प्रेष्यगणैः समेत जलाशयापन्नमिवोन्नगात्रम् ।
विलोक्य दैत्याधिपतिं तदानी न्यमज्जदाश्चर्यमहोदधौ सः ।। ४४ ।।

मरुस्थली धूलिपरिप्लुताशाऽऽकाशास्त विष्वङ्मुषितप्रकाशा ।
हा ! शान्तबुद्धेरपि तत्र नाशाल्लब्धावकाशास्तु कथ सुखाशा ।। ४५ ।।

ऊष्मायमाणो बहुतीव्रवेगात् पृष्ठात् पुरस्ताच्च मरुत् तदैर्त ।
तथापि याति स्म वणिग् रथेष्ठा उत्सारयन् रेणुकणान् स्वभृत्यै ।। ४६ ।।

उपेयिवांस्तस्य विशः स पार्श्वे मार्गाद्रथं स्व स्थगयांचकार ।
आपृच्छ्य पूर्व कुशलप्रवृत्तिं भवान् क्व यातीति तमन्वयुङ्क्त ।। ४७ ।।

वैश्योऽपि यान स्थगयन्नवोचत् वाराणसीतोऽहमुपागतोऽस्मि ।
विक्रेतुमिच्छुर्विविधानि पण्यान्यन्यप्रदेशं प्रति सम्प्रतस्थे ।। ४८ ।।

सपुण्डरीकान् सजलार्द्रवस्त्रान् दृष्ट्वा व आस्वादयतो बिसानि ।
मन्ये समीपे विलसन्ति वर्षाः सरांसि साम्भांसि च सोत्पलानि ।। ४९।।

उदीरितं निष्कपट वचस्तत् निशम्य मायी न्यगदत् स दैत्यः ।
सत्यं भवान् वक्ति यथार्थमेताः भवन्ति वर्षाः प्रकटप्रकर्षाः ।। ५० ।।

एषा विलोक्या हरिता वनाली तद्भूविभागोऽस्त्यतिवृष्टिशाली ।
गुहा गिरीणां सलिलस्य पूर्णाः विभान्ति पद्मानि विकासभाञ्जि ।। ५१ ।।

आस्तामिदं, क्व्यतयोह्यते यद् यानेषु तद्वस्तु किमस्ति वाच्यम् ।
सोऽब्रूत वासांसि हि काशिकानि नाना च खाद्यानि चकासतीति ।। ५२ ।।

श्रुत्वा पुनः कौसृतिकः स दैत्यो जगाद वैश्यात्मजमप्रबुद्धम् ।
यानेऽन्तिमे सातिशयं गरिष्ठे कि भारवन्न्यस्तमिहास्ति वस्तु ।। ५३ ।।

मन्ये जलं स्यादयि मुग्ध बन्धो ! प्रयोजन ते न जलस्य किञ्चित् ।
पुरःसरस्य प्रचुरप्रचाराः समुल्लसन्त्यध्वनि वारिधाराः ।। ५४ ।।

स्वयं विवेच्यं भवताऽधुना तद् यदेषु कुम्भेषु मुधोह्यतेऽम्भः ।
तस्मादुपध्वस्य घटानशेषान् जलं त्वमुत्सृज्य सुखेन याहि ।। ५५ ।।

एवं स दम्भी वणिगात्मजं तमेतैर्वचोभिर्बहु विप्रलभ्य ।
आवासभूमि प्रतियन् स्वकीयां शनैः शनैर्दूरगतो बभूव ।। ५६ ।।

मूढः परप्रत्ययनेयबुद्धिर्वणिक् स दैत्यस्य वचोऽभ्युपेत्य ।
सर्वानुपाध्वंसयदाशु कुम्भान् न तोयलेशोऽपि यतोऽवशिष्टः ।। ५७ ।।

ततः स युग्यान् शकटेषु युक्त्वा प्राचोदयत् तूर्णमभिप्रयातुम् ।
तस्याध्वनो मध्यमुपागतस्य प्राणोपघातिन्युदपाद्युदन्या ।। ५८ ।।

पिपासितोऽभूदनुयायिवर्गोऽप्यमुष्य वैश्यस्य, न केवलं सः ।
अनर्थमेकः कुरुते तदीयं फलं तु तत्पृष्ठचरोऽपि भुङ्क्ते ।। ५९ ।।

अहः समस्तं प्रययौ तृषार्तो न चोपलेभे क्वचनोदबिन्दुः ।
युग्या विमुक्ताः शकटेषु बद्धाः कष्टश्रितैस्तैः सकलैरभावि ।। ६० ।।

क्षीणा नितान्तं तृषिताः क्षुधार्ताः वृषा मनुष्याश्च सम निदद्रुः ।
अजागरुर्नैव च शक्त्यभावात् सर्वेऽप्यभूवन् विगतासवस्ते ।। ६१ ।।

आगत्य दैत्यो निभृतं रजन्यां मृतान् समस्तानपि तानदर्शत् ।
हर्षातिरेकाच्च यथेच्छमादत् भृत्यैरथाप्यादयत स्वकीयैः ।। ६२ ।।

तेषां शरीरावयवोद्धृतानामस्थ्नामवाशिष्यत तत्र राशि. ।
समस्तवस्तूपहितानि तानि पञ्चापि यानानि शतानि चासन् ।। ६३ ।।

एवं स्वसार्थेन समं स वैश्यो मौढ्याच्च लौल्याच्च विनाशमापत् ।
चञ्चूर्यमाणो द्रविणाय गृध्नुः कथं न नश्येदविमृश्यकारी ।। ६४ ।।

ऊर्ध्वं तु वैश्यापगमादतीते मासेऽर्धमासे सति बोधिसत्त्वः ।
प्रशान्तचेता विहितव्यवस्थो व्यापर्तुमिच्छुः स्वपुरादचालीत् ।। ६६ ।।

क्रमेण गच्छन् सुतरां मनीषी कान्तारभूमेः पदमाससाद ।
धन्वेत्यभिज्ञाय च तं प्रदेश प्रपूरयामास जलं घटेषु ।। ६६ ।।

सर्वान् समाहूय निजान् मनुष्यान् यथायथं श्रेणिकृतानवोचत् ।
न मामनापृच्छ्य कदापि तोयं पेयं भवद्भिर्व्यवहारविद्भिः ।। ६७ ।।

अकारणं नाभिदधे वनेषु विषाक्तवृक्षा अपि संभवन्ति ।
पत्रं फलं पुष्पमथापि किंचिद् विनाज्ञया मे न निषेवणीयम् ।। ६८ ।।

आदेयमास्वादितपूर्वमेव पुष्पादिकं किञ्चन वस्तुजातम् ।
एतद्ब्रुवन्तः प्रतियन्तु सत्यं ब्रवीम्यहं वो वचनं हिताय ।। ६९ ।।

इदं समादिश्य मनुष्यसङ्घं स धन्वनो मध्यमवाप शीघ्रम् ।
तदैव दैत्योऽन्तिकमागतः सन् तं बोधिसत्त्वं समवालुलोकत् ।। ७० ।।

प्रतारणायां निपुणश्चकार यथापुरं भूपतिवेशमेषः ।
सम्यक् तमालक्ष्य तु बोधिसत्त्वः स्वचेतसीत्थं कलयाञ्चकार ।। ७१ ।।

न दृश्यते नाप्युपलभ्यते वा जलस्य लेशोऽपि मरुस्थलेऽस्मिन् ।
कान्तारभूमिः खलु निर्जलेति प्रायेण लोके प्रथितः प्रवादः ।। ७२ ।।

बम्भ्रम्यते लोहितचक्षुरत्र व्यपेतभीरेष जनस्तथापि ।
छायास्य भूमौ न विलोक्यतेऽतः प्रत्येमि दैत्यश्छलयन्निवागात् ।। ७३ ।।

असंशयं पूर्वसरः स मूढो वणिक्सुतोऽनेन विमोहितः स्यात् ।
प्रपीड्य विध्वस्य च भोज्यपेयं प्रजग्ध्य सार्थेन सहोज्झितः स्यात् ।। ७४ ।।

मया भृशं सावहितेन भाव्यं न वञ्चनीयः स इवाहमस्मि ।
दैत्योऽपि मे वेत्तु यथा पटुत्वं तथोचितं कार्यमिहातनोमि ।। ७५ ।।

इत्यादि चिन्तन् स उवाच दैत्यं किमर्थमत्रागमनं तवाभूत् ।
प्रतीयसे वञ्चयितेव कश्चिद् द्रुतं स्वमुद्देशमितः प्रयाहि ।। ७६ ।।

अज्ञायि विज्ञेन मया त्वदीयं दुर्धीप्सितं साध्वभिधित्सितं च ।
आकारचेष्टादिभिरभ्युपायैः किं नोहतेऽनुक्तमपीह धीमान् ।। ७७ ।।

अलब्धनीरान्तरसंनिकर्षाः वयं जलं नैव समुत्सृजामः ।
लभामहे यत्र तु तद् द्वितीयं तत्रैनदुत्सृज्य पुनश्चलामः ।। ७८ ।।

व्यापारिणां नो विधिरीदृगेव त्वयात्र कार्यो न वृथा प्रयासः ।
श्रुत्वैतदीय वचनं तदासावन्तर्हितः सन् स्वपदं प्रयातः ।। ७९ ।।

तस्मिन् प्रयाते सति भूतनाथे श्रीबोधिसत्त्वोऽभिदधे स्वभृत्यैः ।
आर्य ! प्रतार्यैव गतो जनोऽसौ त्वया न किं शुश्रुविरे गिरस्ताः ।। ८० ।।

असावभाणीद् यदियं वनाली श्यामायमाना पुरतोऽस्ति दृश्या ।
तस्याः परस्यां भुवि शोभमाना जलस्य वृष्टिर्बहु बोभवीति ॥ ८१ ॥

स धारयित्वा स्रजमुत्पलानामादाय पद्मस्तबकांस्तथैव ।
खादन् मृणालं सलिलार्द्रवासा वृष्टिः पुरस्ताद् भवतीत्यवादीत् ॥ ८२ ॥

अदो वचःप्रत्ययिता न कस्माद् वयं समुत्क्षिप्य जलं प्रयामः ।
विश्रान्तिमेते वृषभा लभेरन् यानेषु भारोऽपि भवेल्लघीयान् ॥ ८३ ॥

मनुष्यसङ्घस्य वचः प्रतीपं प्रकाममापीय स बोधिसत्त्वः ।
यानानि सर्वाण्यवरोध्य लोकानेकीकृतानित्थमब्रूबुधत्तान् ॥ ८४ ॥

व्यामोहमापादयितुं प्रयुक्तं वचोऽदसीयं वितथं प्रतीत ।
एतादृशा दुष्टधियो विरूपाः प्रच्छन्नपापा विचरन्त्यरण्ये ॥ ८५ ॥

प्रश्नानिमान् वस्तु पिपृच्छिषामि तदुत्तरं साधु विचार्य देयम् ।
न ह्यैकमत्यं भविताखिलानां सत्यां गिरं वित्त मयोच्यमानाम् ॥ ८६ ॥

कान्तारभूमाविह निर्जलायां दृष्टा क्वचित् पुष्करिणी श्रुता वा ।
श्रुता न दृष्टा न कदाचनेति प्रत्युतरं चेद्, अमृषोद्यमेतत् ॥ ८७ ॥

दूरं कियद् याति हि वृष्टिवायुः प्रयात्यसौ योजनमात्रमेव ।
युष्मासु संवेदयतेऽत्र कस्तं, नास्मासु संवेदयतेऽत्र कश्चित् ॥ ८८ ॥

मेघाः कियद् दूरमवेक्षिताः स्युः स्युरीक्षिता योजनमात्रमेव ।
युष्मास्वितः कश्चिदवेक्षते तां नास्मास्वितः कश्चिदपीक्षते तान् ॥ ८९ ॥

विद्युत् कियद् दूरमवेक्षिता स्यात् चत्वारि पञ्चापि च योजनानि ।
युष्मास्वितः कश्चिदवेक्षते तां नास्मास्वित. कश्चिदपीक्षते ताम् ॥ ९० ॥

दूरं कियद् वारिदगर्जनं स्यात् द्वे योजने योजनमेककं वा ।
युष्मास्वितस्तच्च शृणोति कश्चित् नास्मास्वितस्तच्च शृणोति कश्चित् ॥९१॥

यद्येवमासीन्न मनुष्य एष प्रतारकः कोऽपि तु दैत्य आसीत् ।
भ्रमं समुत्पाद्य वृथाम्बुवृष्टेर्व्यामोहयामास स मायया वः ॥ ९२ ॥

द्रष्टव्यमेतन्नचिराद् भवद्भिर्यथाऽमुना वैश्यसुत: स जग्ध: ।
मार्गे समेष्यन्ति तदुज्झितानि यानानि पञ्चापि शतानि तानि ॥ ९३ ॥

नासीदुपाये कुशलोऽयंपुत्रो दैत्येन तस्मादसकावखादि ।
तथा न यूयं भवतेति कृत्वा समैरनुत्सृष्टजलैः प्रयेयम् ॥ ९४ ॥

कर्तव्यमादिश्य स बोधिसत्त्वः प्रातिष्ठताग्रे स्वजनैः परीतः ।
ददर्श पचापि शतानि यानान्यस्थीनि चोक्ष्णामथ पूरुषाणाम् ॥ ९५ ॥

अभ्याशमित्वा शकटान्यरौत्सीद् वृषान् विमोच्यास्थगयच्च यात्राम् ।
प्रागेव सूर्यास्तमयात् समस्तानप्याशयद् भोजनमिष्टसिद्धयै ॥ ९६ ॥

रात्रौ च सत्रा कतिभिर्मनुष्यैः दैत्योपघातार्थमुपात्तशस्त्रः ।
युग्यान् निबध्य स्वजनौघमध्ये यामत्रय जागरितोऽवतस्थे ॥ ९७ ॥

कल्ये विशल्य. स विमोच्य बन्धाद् यात्रार्थमुक्षणः शकटेष्वयुक्त ।
जीर्णानि यानानि विहाय धीरो दृढान्युपादाय च सम्प्रतस्थे ॥ ९८ ॥

देशं गतो व्याप्रियतातिमात्रं पेणे सहस्रस्य शतस्य चापि ।
वस्तु ह्यमूल्यं न कुतोऽप्यगृह्णाच्चिक्राय पण्य बहुमूल्यमेव ॥ ९९ ॥

स तत्र भूयांसमलब्ध लाभ सार्थस्य सार्थस्य समृद्धिमारत् ।
भूत्वा पुनर्द्वैगुणिकश्च पण्यैर्गुण्यः स्वदेश न्यवृतत् स्वपुण्यै ॥१००॥

व्यापारिणोरेतवतोर्विदेशं द्वयोः कथावस्त्विवदमस्ति दृश्यम् ।
एकस्तु लाभ लभते महान्तं स्वार्थादथान्यश्च्यवते नितान्तम् ॥ १०१ ॥

किं कारण तत्र विवेचनीय हेयं हि दु.खं सुखमेषणीयम् ।
कथापदेशेन कृती महात्मा बुद्धोऽर्थमेनं प्रकटीकरोति ॥ १०२ ॥

यः शुद्धबुद्धया कुरुते स्वकार्यं विचारवानस्ति चरित्रवांश्च ।
धीरस्य लब्धानुभवस्य तस्य नतस्य हानिर्न कदाचिदस्ति ॥ १०३ ॥

लेभे परस्ताद्गमनेऽपि लाभ श्रीबोधिसत्त्वो न च कृच्छ्रमार्च्छन् ।
वणिक्सुतः पूर्वसरोऽपि हानि ग्लानि च सव्यापदमापदेवम् ॥ १०४ ॥

# द्वितीयः सर्गः

( रथोद्धतावृत्तम् )

काशिनाम्नि ललिते वराणसेत्याख्यया सुविदिते पुरे पुरा ।
ब्रह्मदत्तनृपतिर्यथाविधि प्राशिषद् वसुमती महायशा ॥ १ ।

तस्य सम्यगनुतिष्ठतश्चिरं राज्यशासनमनाकुलं स्थिरम् ।
कामनीयकमधाद् गुणाञ्चितं भूतपञ्चकमपि प्रपञ्चितम् ॥ २ ॥

तद्गृहे जनिमलब्ध पुण्यवान् बुद्ध एव भगवान् कदाचन ।
यः प्रबुद्धमतिरात्मचिन्तनाद् बोधिसत्त्व इति गीयते भुवि ॥ ३ ॥

बिभ्रती तमचकान् महिष्यपि बुद्धमन्तरुदरे महोदयम् ।
भूषयन्ति जननीं स्वजन्मना तन्निभा हि विरला विभूतय ॥ ४॥

मातृकुक्षिरपि सा गरीयसी धन्यतामुपगतेति मन्यताम् ।
यत्र बुद्ध उदयं गतो बभौ गर्भकष्टपरिवर्जमर्भकः ॥ ५ ॥

स क्रमेण ववृधे कुमारकः श्रीकुमार इति नाम लम्भितः ।
स्वस्थसुन्दरवपुः समन्ततः सद्गुणैश्च सकलैरलङ्कृतः ॥ ६ ॥

एत्य तक्षकशिलां कलाप्रियोऽधीत्यभूदखिलवाङ्मये पुनः ।
प्राप्तषोडशसमो युवा भवन् यौवराज्यपदवीमधिष्ठितः ॥ ७ ॥

प्रीतिमत्युचितकर्मकर्तरि स्वर्गते पितरि भूमिभर्तरि ।
नित्यमात्तविनय स धर्मतो ब्रह्मदत्ततनयः क्षमामशात् ॥ ८ ॥

नादधुः पदममुष्य शासने व्याधिभीतिकलहाद्युपद्रवाः ।
तत्प्रजाभिरनिशं सुकर्मभिः स्वसुखानि बिभरांबभूविरे ।। ९ ।।

निर्भयाः सहृदयागतस्मया रोषदोषरहिताः परस्परम् ।
प्रीतिपूर्वकमुदारचेतसश्चक्रिरे व्यवहृति समे जनाः ।। १० ।।

निर्णयं प्रकुरुते स्म भूपतिः शास्त्रतो, न खलु कामचारतः ।
सत्यशान्तिकरुणाक्षमार्जवैरन्वरञ्जयदसौ निजाः प्रजाः ।। ११ ।।

पार्थिवं तमवलोक्य धार्मिकं मन्त्रिणस्तदनुसारिणोऽभवन् ।
तत्क्रमेण सकलोऽप्यशिश्रियद् धार्मिकत्वमधिकारिणां गणः ।। १२ ।।

दोषजातमपहाय जज्ञिरे सर्व एव गुणपक्षपातिनः ।
द्रुह्यति स्म न कुतोपि कश्चन न व्यधाद् व्युदितमप्यनर्थकम् ।। १३ ।।

शाठ्यकूटकपटान् व्यघट्टयन् निश्छलं च सरलं व्यवाहरन् ।
सज्जनाः समुदितार्थसिद्धयः प्राप्नुवन् मुदमुदात्तबुद्धयः ।। १४ ।।

इत्थमुत्तमगुणैः प्रशासिते सत्प्रवृत्तिमति भूपशासने ।
वस्तुवादविरहाद् वृथाऽभवन् न्यायविध्यधिकृतास्तदालयाः ।। १५ ।।

प्राड्विवाकनिवहः प्रमाणविन् न्यायसद्म समये समागतः ।
वादिनं प्रतिविवादिनं जनं पश्यति स्म न कमप्युपस्थितम् ।। १६ ।।

यत्र नास्ति कलहः कथंचन क्वापि नैव च विवादभावना ।
तत्र किंविषयकोऽस्तु निर्णयो न्यायशासनकृतश्च किंकृताः ।। १७ ।।

आकलय्य निखिलं व्यवस्थितं दोषलेशविकलं स्वशासनम् ।
आत्मशोधनरतो व्यचीचरद् भूपतिः किल कुमारसंज्ञकः ।। १८ ।।

सन्ति नाम मयि येपि दुर्गुणास्तान्निरीक्षितुमहं यतेऽधुना ।
सद्गुणाश्रयणमेव वस्तुतः श्रेयसे मनुजजन्मनो मम ।। १९ ।।

कश्चिदस्ति यदि दुर्गुणो मयि तं विवेक्तुमिह नालमस्म्यहम् ।
मद्गतं लघु महच्च दूषणं निश्चितं मदितरोऽभिधास्यति ।। २० ।।

आत्मदोषरहितश्च सर्वथा गुण्य एव भवितास्मि पुण्यवान् ।
इत्यतः परिषदि स्थिताञ्जनान् दोषमात्मगतमन्वयुङ्क्त सः ।। २१ ।।

किन्तु तत्र सदसि स्थिता जना दोषमेकमपि तस्य नाभ्यधुः ।
केवलानचकथन् गुणानहो स्याद् गुणाधिकरणे क्व दूषणम् ।। २२ ।।

तान् निशाम्य गुणवादिनो जनान् भूपतिः पुनरिदं व्यचिन्तयत् ।
मद्भयान्न कथयन्त्यमी समे मय्यवस्थितसमीहदूषणम् ।। २३ ।।

अन्वयुक्षत ततोऽन्तरे गृहा दूरतश्च पुरवासिनो नराः ।
अभ्यधायिषत केवलं गुणास्तैरपि क्षितिभृतोस्य तत्त्वतः ।। २४ ।।

प्रस्थित स नगराद् बहिः स्वके शासने जनपद पिपृच्छिषुः ।
चक्रयानमधिरुह्य यन्तृमन् मन्त्रिषूपहितराज्यशासनः ।। २५ ।।

प्रान्तभूमिषु समन्तत प्रयान् पर्यपृच्छदखिलान् स्वदूषणम् ।
किन्तु यावदुपाशृण्वन्ततो नाप कञ्चिदपि दोषवादिनम् ।। २६ ।।

अभ्रमीदधिकृत स्वमण्डल सर्वमेव पृथिवीपतिस्तदा ।
चिन्तयन् प्रतिनिवर्तन ततो राज्यसीम्न्युपगत. स्थितश्चिरम् ।। २७ ।।

तावदेव खलु मल्लिकाभिधः कोशलेश्वरवरोऽभ्युपाययौ ।
सोपि सारथियुते रथे स्थितो भ्राम्यति स्म निजराज्यसीमनि ।। २८ ।।

काश्यधीश्वरकुमारभूपतेस्तुल्यमेव स बभूव धार्मिकः ।
आत्मदूषणगवेषणेच्छया पर्यटन् समगतात्र वर्त्मनि ।। २९ ।।

तावुभावपि रथस्थितौ तदा स्व स्वमाशु पुरमेतुमुद्यतौ ।
संकटे पथि नितान्तसकुले दुर्गमे युगपदेव सगतौ ।। ३० ।।

तत्तु वर्त्म रथिनो. सतोस्तयोर्नैकदैव सुगमं द्वयोरभूत् ।
मेदिनी स्वरसमेदिनी परं किं करोतु विषमा रथोद्धता ।। ३१ ।।

गन्तुमिच्छुरवदत् तदाग्रतः कोशलेश्वररथस्य सारथिः ।
देहि मार्गमयि मत्कृते पुरः स्व रथ प्रतिनिवर्त्य सत्वरम् ।। ३२ ।।

प्रत्यवोचदथ तं विनीतवत् काश्यधीश्वररथस्य सारथिः ।
मत्कृतेपि भवता प्रदीयतां मार्ग, एष च निवर्ततां रथः ।। ३३ ।।

सारथि. पुनरुवाच कोशलाधीश्वरः खलु रथेऽत्र तिष्ठति ।
सद्‌गुणाश्रयममुष्य गौरवं विद्धयतो रथमपाकुरु स्वकम् ।। ३४ ।।

काश्यधीश्वर इहापि तिष्ठति स्यन्दने सकललोकनन्दनः ।
इत्युवाच विनयेन तं वचः श्रीकुमारनृपतेश्च सारथिः ।। ३५ ।।

का गतिर्भवतु तुल्ययोर्द्वयोर्भूपयोर्युगपदेतयोः पथि ।
सारथी इति मिथो विचारणातत्परावभवतां सविस्मयम् ।। ३६ ।।

तत्र काशिक उवाच कौशलं सोऽग्रतो व्रजतु नावसंशयम् ।
यस्य भूपतिरिहास्ति भूतले योग्यतातिशयितो महत्तरः ।। ३७ ।।

युक्तियुक्तमिति वाक्यमूचुषि काशिके क्षितिपतेर्नियन्तरि ।
कोशलेशरथसारथिस्तदा स्वीचकार वचनं तथास्त्विति ।। ३८ ।।

अस्तु तर्हि विगतात्मसंशयस्त्वं वय. प्रकथय स्वभूपतेः ।
वृद्ध एष वयसापि सन् पुन. स्यान्मदीयनृपतेर्महत्तरः ।। ३९ ।।

काश्यधीशरथसारथाविति प्रोक्तवत्युचितमाह सोऽपरः ।
श्रीमतापि वय उच्यतां निजक्ष्माभृतो भवतु येन निर्णयः ।। ४० ।।

षष्टिरङ्ग ! शरदोऽभवद्वयो मामकीननृपतेरितीरिते ।
यद्वयोस्ति तव भूपतेर्ध्रुवं तन्ममापि भवतोत्युदैरयत् ।। ४१ ।।

एवमेव बलनीतिकौशलाद्यप्यपृच्छदुचितं द्वयं द्वयोः ।
सर्वथैव सदृशं तयोरभूद् दृश्यमानमिह वस्तु लौकिकम् ।। ४२ ।।

ज्ञातिगोत्रकुलबुद्धिकीर्तिभूकोषसैन्यधनधान्यसम्पदा ।
तुल्यतामुपगतावुभाविति काशिकः स विदितोऽभ्यधात्पुनः ।। ४३ ।।

कथ्यतां तव नृपस्य कीदृशं शीलमस्ति ननु कौशलप्रिय ।
शीलतोपि स महान् भवन् पुनः स्यान्मदीयनृपतेर्महत्तरः ।। ४४ ।।

कौशलस्त्वकथयद् यथायथं शीलमात्मनृपते. समासतः ।
स्वामिनो भवति यः प्रियंकरस्तद्‌गुणान् कथमसौ न वर्णयेत् ॥ ४५ ॥

मल्लिको मम चरित्रवान् नृपः शीलवान् विनयवांश्च राजते ।
साधुकारिषु च साधुतां भजन् पापकृत्स्वपि च कोपनो भवन् ॥ ४६ ॥

यादृशी भवति यस्य भावना तादृशी स खलु सिद्धिमृच्छति ।
सोपपत्तिकमिदं वचः स्वयं मल्लिकोऽत्र चरितार्थयत्ययम् ॥ ४७ ॥

साधुना चरति साधुतां सदा दुर्जनेन सह दुष्टतां तथा ।
मार्दवञ्च मृदुना समं भजत्युद्धतो भवति चोद्धतेन सः ॥ ४८ ॥

यः शठेषु शठतां समाचरन् नीतिशास्त्रविदुदीर्यते महान् ।
तस्य मल्लिकनृपस्य सारवच्छीलमेतदुपपादित मया ॥ ४९ ॥

कोशलेशचरित निशम्य तत् काशिकः पुनरमु न्यवीविदत् ।
एतदेव किमु वर्तते भवद्‌भूपतेश्चरितमुत्तम महत् ॥ ५० ॥

नाभ्यधायि भवता विशिष्टता काचन स्वनृपशीलवर्णने ।
प्राकृता अपि समाचरन्ति तां या शठेषु शठतोपपादिता ॥ ५१ ॥

दुष्टतां चरति दुर्जनेषु यः शीलवानिति कथं स मन्यताम् ।
नेदृशं चरितमुज्ज्वलं महद् गौरवास्पदमनिन्द्यमुच्यते ॥ ५२ ॥

ईदृशा यदि गुणास्त्वयादृताः कथ्यतां तदगुणा भवन्ति के ।
लौकिकोऽयमुपचार इष्यतां, नैतदस्ति चरितं महात्मनाम् ॥ ५३ ॥

शीलमुच्चतरमन्यदस्ति भो ! ज्ञेयमत्र भवता विशेषतः ।
यत्र तद् भवति, बुध्यतामसौ शीलवान्ननु पुमानलौकिकः ॥ ५४ ॥

प्राजिता नृपरथस्य कौशलः प्रत्युवाच तमवाप्तकौशलः ।
सन्तु मन्नृपगुणास्तवागुणाः कीदृशास्तु भवदीशितुर्गुणाः ॥ ५५ ॥

वाचमेवमुचितां निपीय तामभ्यभाषत पुनः स काशिकः ।
श्रूयतां मदवनीपतेस्त्वया शीलमुच्चममलं गुणोज्ज्वलम् ॥ ५६ ॥

सत्यमेव जयतीह नानृतं हिसयापि न फलत्यभीप्सितम् ।
इत्यहिंसनपरोऽमृषोद्यवाक् काश्यधीश्वरवरः प्रसीदति ।। ५७ ।।

शान्तिपूर्वकमयं प्रयस्यति क्रुद्धमप्यकुपितो निरस्यति ।
साधुवद् व्यवहरन्न साधुनाप्युद्धतं प्रति सदैव शाम्यति ।। ५८ ।।

सत्यवाद्यनृतवादिनं जन दानतश्च कृपणं जयत्ययम् ।
लोभमोहभयशोकवर्जितः सौख्यमत्र लभते निरत्ययम् ।। ५९ ।।

एतदेव चरित प्रशसितं शीलमप्यभिहितं महत्तरम् ।
यत्सदाचरति वाङ्मनोवपु. स्वस्थतामुपगतोऽयमीश्वरः ।। ६० ।।

( मालिनीवृत्तम् )

इति निगदति तस्मिन् काशिकाधीशसूते
विलसति च कुमारे वाङ्मनःकायपूते ।
सहकृतनिजसूतो वाचमाचम्य रम्यां
द्रुततरमवतीर्णः स्यन्दनात् कोशलेशः ।। ६१ ।।

व्यधित सपदि वाहान् मुक्तबन्धान् प्रसन्न·
स्वरथमथ निवर्त्यायिच्छदध्वानमस्मै ।
नृपतिरपि कुमारः प्रीतिसम्प्रीणितांगः
पुलकिततनुरुच्चैर्मल्लिकं सच्चकार ।। ६२ ।।

उभयमिलनवेला सातिधन्याभवत्तां
कथमपि गमयित्वा साधुशिक्षां च दत्त्वा ।
पथि सति गतियोगे स्यन्दनस्थः ससूतो
भवनमवनिपालः स्वं कुमारो जगाम ।। ६३ ।।

गतवति च महीपे काशिके मल्लिकोपि
हृदि दधदविगीत श्रीकुमारस्य शीलम् ।
प्रमुदितवदन· सश्चक्रयानाधिरुढो
निजनगरमयासीत् सूतनिर्दिष्टवर्त्मा ।। ६४ ।।

( उपजातिवृत्तम् )

कथेयमानन्दयति प्रकाम
शीलं तथाख्याति मनोभिरामम् ।
तस्मात् सदाचारवता जनेन
भाव्यं जगत्यामभिनन्दितेन ।। ६५ ।।

विना सदाचारमह विलोके
न जीवन किंचन जीवलोके ।
सदाऽपकारिष्वपि चोपकाराद्
द्रवन्मना योस्ति, महान् स एव ।। ६६ ।।

तथा महत्त्व न धनस्य विद्यते
वृथार्जनात् तेन मनश्च खिद्यते ।
यथेह शीलं सदलंकरोत्यलं
महोज्ज्वल मानवजन्म निर्मलम् ।। ६७ ।।



# तृतीयः सर्गः

( अनुष्टुब्वृत्तम् )

काशीक्षेत्रे प्रसिद्धाभूत् पुरा वाराणसी पुरी ।
ब्रह्मदत्तो नृपो यस्यामप्रमत्तो व्यराजत ।। १ ।।

विधिना शास्त्रदृष्टेन प्रकृतीः सोऽनुरञ्जयन् ।
असपत्नं सपत्नीकं सरत्ना भुवमन्वशात् ।। २ ।।

तस्य सौराज्ययुक्तस्य प्रिया सौम्या विचक्षणा ।
मुख्या सौभाग्यवत्यासीन्महिष्याहितलक्षणा ।। ३ ।।

रमणी रमणीयांगी रममाणा चिरं मुदा ।
सम्पन्नापन्नसत्त्वा सा ब्रह्मदत्तेन भूभृता ।। ४ ।।

तस्याः कृताभिषेकायाः प्राविक्षत्कुक्षिमुत्तमाम् ।
दिष्ट्या बुद्धो महात्मैव बोधिसत्त्वाभिधः स्वयम् ।। ५ ।।

प्राप्तकाला त्वसौ देवी शुद्धबुद्धिं जितेन्द्रियम् ।
बोधिसत्त्वाभिधं बुद्धं महात्मानमजीजनत् ।। ६ ।।

स बालः प्राप्तसंस्कारः स्पृहणीयगुणान्वितः ।
भृशमानन्दयामास सर्वानप्यभितो जनान् ।। ७ ।।

संभवन्तीदृशाः पुण्यैर्लोकाभ्युदयहेतवः ।
सफलं तद् गृहं यत्र बुद्धोऽबुद्ध विशुद्धधीः ।। ८ ।।

अथास्य जननादूर्ध्वं शुभमेकादशेऽहनि ।
पित्रा नाम कृतं प्रीत्या शीलवानिति सुन्दरम् ।। ९ ।।

सत्स्वभावात् सदाचारात् सद्विचाराच्च सर्वथा ।
अन्वर्थसंज्ञास्तस्यासन् यथा नाम तथा गुणाः ॥ १० ॥

राध्यन्तोऽस्मै कुमाराय गणका अप्यजीगणन् ।
सुखसम्पत्तिसौभाग्याशसि नाम च जन्म च ॥ ११ ॥

प्राप्तषोडशवर्षोऽसौ शीलवान्नाम माणव ।
पारीणः सर्वशास्त्राणां राजनीत्यामधीत्यभूत् ॥ १२ ॥

कथं नु समयाकुर्यात् प्रतिभावान् बुधो मुधा ।
क्रममाणा मतिः स्वच्छा न वयः क्रममीक्षते ॥ १३ ॥

वयस्यल्पेपि शास्त्राणां रहस्यमधिजग्मुषी ।
सूक्ष्मा सर्वपथीनासीत् प्रशस्ता तस्य शेमुषी ॥ १४ ॥

स्वतातेऽथ दिवं याते ब्रह्मदत्ते महीपतौ ।
राज्यसिहासनं पित्र्यमधितष्ठौ महामनाः ॥ १५ ॥

राज्यासनमधिष्ठाय शुशुभे स शुभैर्गुणैः ।
उदयाचलमारूढः शीतरश्मिरिवोदित. ॥ १६ ॥

ऋजुदृष्टिर्विशुद्धात्मा करुणावरुणालय. ।
चकार सर्वभूतानां भूय' श्रेयोनुशासनम् ॥ १७ ॥

दरिद्रेभ्यो ददौ दान धर्मशालाश्च निर्ममौ ।
प्रजानामिष्टमादध्यौ नित्य पुण्योदयाद् बभौ ॥ १८ ॥

सौहृदय्यं तथा मैत्री प्रीति प्राचीचरद् भुवि ।
वैमनस्य घृणामीर्ष्या हिसाञ्चाचिच्यवत्पुन. ॥ १९ ॥

पुत्रवत्पालयामास सस्नेह सकलाः प्रजाः ।
सदात्मैकत्वविद्यायाः प्रतिपत्तिमुपेयिवान् ॥ २० ॥

संयमी शीलवान्नाम युवा शान्तः स पार्थिवः ।
पुण्यशीलामिलां चक्रे स्वकीययशसोज्ज्वलाम् ॥ २१ ॥

सध्याजपोपवासादिव्रतपालनतत्परः ।
प्रशासद् विधिवद्राज्यं लभते स्म पर सुखम् ॥ २२ ॥

एव वितन्वतस्तस्य राज्यकार्य महीक्षितः ।
अधर्मश्चारिवर्गश्च न पुरे पदमादधौ ॥ २३ ॥

एकदा भ्रष्टचारित्रो धृष्टः कश्चन पापकृत् ।
अमात्यो नष्टबुद्धित्वादवरोधमदूदुषत् ॥ २४ ॥

शुद्धान्ते तस्य शुद्धान्त.करणस्यापि दुर्धिया ।
अतीव कुत्सित तेन मन्त्रिणाचेष्टि चेष्टितम् ॥ २५ ॥

सद्वृत्तेष्वपि दुर्वृत्ताः कुटिलाः सरलेष्वपि ।
शीलवत्सु च दुःशीलाः संभवन्तीह संसृतौ ॥ २६ ॥

वैयात्यमकृतामात्यो ह्यकृतात्मा स मन्दधी. ।
दुर्भाग्योपहतो नून शास्त्रज्ञोपि विमुह्यति ॥ २७ ॥

यदा शीलवताऽवेदि मन्त्रिणस्तस्य दुष्कृतम् ।
तदाहूय स एकान्ते पौनःपुन्येन धिक्कृतः ॥ २८ ॥

उक्तश्चेदं त्वया मूढ ! सचिवानुचित कृतम् ।
कर्मणो गर्हणीयस्य त्वमस्य फलमाप्नुहि ॥ २९ ॥

स्पष्टं कष्टप्रदो दुष्टस्त्वं न वस्तुमिहार्हसि ।
अतः सत्वरमेतस्मान् मम राज्याद् बहिर्भव ॥ ३० ॥

स्वापतेय स्वमादाय सर्व दारगवादिकम् ।
सपद्येव त्वयामात्य ! पद्यान्याद्य प्रपद्यताम् ॥ ३१ ॥

स्थानान्तरमितो याहि त्व न विश्वासभाजनम् ।
वञ्चयन् दुष्टशीलत्वात्सुशील कृतिनं जनम् ॥ ३२ ॥

इत्युक्त्वा तं स भूपालः स्वदेशान्निरवासयत् ।
सचक्ष्या ह्यसुखोदर्का सदा दुर्जनसगतिः ॥ ३३ ॥

भूभृतेत्थं समादिष्टः स मन्त्री दुष्टचेष्टितः ।
काशीराष्ट्रस्य सीमानं झटित्येवोदलङ्घत ।। ३४ ।।

परितो गम्यमानोऽसौ सीमामुल्लङ्घ्य काशिकीम् ।
अथ कोशलदेशस्य भूपतिं शरणं ययौ ।। ३५ ।।

द्वाःस्थैः कृतप्रवेशस्तु कोशलेशमुपास्थित ।
चाटूक्तिनिपुणः पाटूपटोऽसेविष्ट तं पुनः ।। ३६ ।।

सेवमानः स दुर्मन्त्री प्रत्यहं कोशलाधिपम् ।
अचिरेणैव कालेन तस्य विश्वासभूरभूत् ।। ३७ ।।

प्रगाढप्रत्ययो भूत्वा स किमन्त्री कदाचन ।
अनिष्टमभिसंधित्सुः कोशलाधीशमभ्यधात् ।। ३८ ।।

देव ! वाराणसीराज्य नवनीतसम मृदु ।
अस्त्यद्य मद्यमाद्यं ते क्षुद्र क्षौद्रमिवानतम् ।। ३९ ।।

तद्राजः सरलो नम्रस्वभावोऽत्यन्तकोमलः ।
स्तोकया सेनयैवाशु जय्यो भवितुमर्हति ।। ४० ।।

शीलवान् हि क्षमाशीलो न कदाप्यभिमन्यते ।
अवश्यं वश्यतां नेयः स्वाभिमानवता त्वया ।। ४१ ।।

गम्भीरधीरधीरस्य श्रुत्वा वाक्यं कुमन्त्रिणः ।
कोशलाधीश्वरः स्वीये मनस्येव व्यचारयत् ।। ४२ ।।

अस्ति वाराणसीराज्य महीय इति विश्रुतम् ।
अनीकिन्याल्पयैवाद कथ जय्यं भविष्यति ।। ४३ ।।

एष मन्त्री त्वसन्दिग्धं जय्यत्वं तस्य वक्त्यतः ।।
मन्ये गुप्तचरोऽमुष्य राज्यस्यायं भवेदिति ।। ४४ ।।

आलोच्य कोशलाधीशः प्रावोचन्मन्त्रिणं पुनः ।
ननु राज्यस्य कस्यापि प्रणिधिस्त्वं प्रतीयसे ।। ४५ ।।

मन्त्रिणोक्तमहं राजन् प्रणिधिर्नास्मि कस्यचित् ।
क्रियतां मयि विश्वासः प्रेष्यान् प्रेष्यावलोक्यताम् ॥ ४६ ॥
काशीसीमासमीपस्थान् ग्रामांस्तावदुपद्रव ।
ध्रुवं विज्ञास्यते तेन राज्ञस्तस्याविरोधिता ॥ ४७ ॥
दयालुर्मृदुरक्रूरः सर्वसत्त्वाभयप्रदः ।
सर्वथैवानलंभूष्णुः प्रतियोद्धुमसौ नृपः ॥ ४८ ॥
सीमोपद्रावकान् सर्वान् विनिगृह्य यदा प्रजाः ।
भूपस्यान्तिकमेष्यन्ति तदा तान् स विमोक्ष्यति ॥ ४९ ॥
दण्ड्यानपि रिपून् प्रायः प्रेम्णा संभावयिष्यति ।
अदण्डयित्वा चैतेभ्यो धनं प्रत्युत दास्यति ॥ ५० ॥
इत्यमात्यवचः श्रुत्वा कोशलेशः स्वसैनिकैः ।
काशीराज्यस्य सीमान्तप्रदेशान् मङ्क्ष्वनीनशत् ॥ ५१ ॥
कोशलेश्वरसैन्येन ध्वस्तसीमाः समन्ततः ।
प्रजा दस्युगृहीतास्ताः काशीराजान्तिकं ययुः ॥ ५२ ॥
ऊचुश्चैवं महाराज ! सीमाविध्वंसका इमे ।
दस्यवो दण्डमर्हन्तीत्युचितं यत्तदाचर ॥ ५३ ॥
काशीराजस्तु धर्मात्मा शीलवान् बलवानपि ।
अत्यन्तनिर्मलं चित्तं कृत्वा पप्रच्छ तस्करान् ॥ ५४ ॥
भद्राः ! किमिति सीमान्तप्रदेशोऽयं विनाश्यते ।
युष्माभिर्विगताशङ्कैर्यथार्थमभिधीयताम् ॥ ५५॥
ते प्रोचुर्जीविकोपायाभावादेतद्विनिन्दितम् ।
अकृत्यं क्षुन्निवृत्त्यर्थं जीविकाकृत्य सेव्यते ॥ ५६ ॥
राजोवाच कुतो यूयं न मदन्तिकमागताः ।
इच्छापूर्तिमहं कर्तुं समर्थः स्यां व आदरात् ॥ ५७ ॥

अस्तु तावत्पुनर्नैव सीमाध्वसो विधीयताम् ।
इद चाभीप्सितं द्रव्य समादायोपभुज्यताम् ।। ५८ ।।
प्रोच्यैवमन्तिकान्मुक्तांश्चक्रे तान् स धनान्वितान् ।
उपकर्ता भवेत्साधु सदैवापकृतावपि ।। ५९ ।।
प्रत्यर्थिनोपि लब्धार्था. कोशलाधीशमभ्ययान् ।
अखिलञ्चैव वृत्तान्तं स्व यथास्व न्यवेदयन् ।। ६० ।।
तदेतदद्भुत वृत्तमाकलय्यापि शंकितः ।
कोशलाधीश्वरः काशी नैवाक्रमितुमैहत ।। ६१ ।।
शनैः शनैः स निर्भीको भूत्वाश्चर्यसमन्वितः ।
शील शीलवतः पश्यन् काशीमध्यमुपागतः ।। ६२ ।।
मध्याज्जनपदांस्तत्र द्राक् स्वसैन्यैर्व्यनाशयत् ।
समस्तवस्तुसम्पूर्णामलुलुण्ठत् पुन. पुरम् ।। ६३ ।।
दयावान् काश्यधीशस्तु न मनागपि चुक्षुभे ।
कोशलेशकृत देशध्वस दृष्ट्वा च चक्षमे ।। ६४ ।।
निग्रहीतु समर्थोपि न वाच्य किञ्चिदुक्तवान् ।
धन दत्त्वामुचत्सर्वास्तानुपद्रवकारिणः ।। ६५ ।।
अथ कोशलभूपालः काशीराजमनुल्बणम् ।
अहिस्र धार्मिक नम्रं व्यजानात् प्रकृतिप्रियम् ।। ६६ ।।
उद्दण्डोऽसौ महीपालं तथा ज्ञात्वाऽभ्यषेणयत् ।
ससंरम्भं महारम्भ. काशीराज्यजिघृक्षया ।। ६७ ।।
काश्यधीशस्य सेनान्यो वाहिन्याममितौजसः ।
आसन्नासन्नसाहस्रा योद्धारः समराङ्गणे ।। ६८ ।।
संमुखापतदुद्दाममत्तवारणवारणाः ।
स्वराष्ट्रस्वामिरक्षार्थ विहितप्राणधारणाः ।। ६९ ।।

अपृष्ठदर्शिनो वीरा वज्रपातेऽप्यनाकुलाः ।
क्षेपीयांसो महाप्राणा मनोवाक्कायनिस्तुला: ॥ ७० ॥

विद्युदुद्द्योतवद् दीप्राः स्वाम्यादेशवशंवदाः ।
जम्बूद्वीपजये शक्ताः शूराः सर्वेप्यकद्वदाः ॥ ७१ ॥

तेन सैन्यसहस्रेण कोशलेशकृता क्षतिः ।
स्वदेशस्य यदादर्शि काश्यधीशस्तदोदितः ॥ ७२ ॥

राजन्नागन्तुकः कश्चित् कोशलाख्यमहीपति ।
राज्य वाराणसेयं नः संजिघृक्षुरुपाद्रवत् ॥ ७३ ॥

सीमानस्तेन विध्वस्ता मध्या जनपदा अपि ।
आततायिनमायान्त कि न हन्याम तं वयम् ॥ ७४ ॥

साम्प्रतं दीयतामाज्ञा नात्र किञ्चिदसाम्प्रतम् ।
वयं गत्वा निगृह्णीमो राज्यसीमाविलङ्घिनम् ॥ ७५ ॥

जीवग्राह गृहीतोऽद्य स्वनाशं स तु नङ्क्ष्यति ।
शठे शाठ्यविधानेन नैव दोष· प्रसङ्क्ष्यति ॥ ७६ ॥

स्वभटानामिद श्रुत्वा युक्तियुक्त वचो नृप. ।
शीलवान् स दयाशीलो निर्वैरं प्रत्यभाषत ॥ ७७ ॥

प्रियाः मत्कारणात् कश्चिन्नैव कष्टमवाप्नुयात् ।
योपि राज्यं जिघृक्षुः स्याद् गृह्णीयात्स इहागतः ॥ ७८ ॥

युष्भाभिर्न विरोद्धव्यो दातव्याश्चार्थसंम्पदः ।
न सार्ध कोशलेशेन लेशेनापीष्यतां भिदा ॥ ७९ ॥

हिसैव वर्धते बह्वी हिसकं प्रति हिसया ।
सुखमात्यन्तिकं लब्धुमहिसैव गरीयसी ॥ ८० ॥

शान्त्या प्रशमयेत् क्रोधं सलिलेनेव पावकम् ।
चितं प्रसादयेद् धीमान् सर्वभूतानुकम्पया ॥ ८१ ॥

इत्याद्यन्वशिषद् राजा दयालुः शीलवान् भटान् ।
अहिंसकः कथं कुर्याद् हिंसावृत्तिं विगर्हिताम् ।। ८२ ।।
अथोल्लङ्घितसीमान्तः स्वयं कोशलभूपतिः ।
मध्येजनपदं चक्रे प्रवेशमकुतोभयः ।। ८३ ।।
तद्वृत्तं काश्यधीशस्य सचिवैः पुनरौच्यत ।
किंतु राजा यथापूर्वं क्षमामेवान्वमन्यत ।। ८४ ।।
न चुक्रोध निशम्यामुं क्रुध्यन्तमपि शात्रवम् ।
श्लाघ्यमक्रोधनस्येह क्षमा वीरस्य भूषणम् ।। ८५ ।।
तदानीं कोशलाधीशः पुरद्वारमुपाश्रितः ।
संदेशं प्राहिणोत् काशीमहाराजस्य संनिधौ ।। ८६ ।।
राज्यं प्रदीयतां स्वीयं युध्यतां वा मया सह ।
द्वयोरेकतरः पक्षः सत्वरं प्रतिपद्यताम् ।। ८७ ।।
अहं राज्यं जिघृक्षामि दीयतां तत् त्वयाञ्जसा ।
अथ बुद्धौ विरुद्धायां युद्धमद्धा विधीयताम् ।। ८८ ।।
ततः काशीमहीपालो युक्तं प्रत्युत्तरं ददौ ।
युद्धमावश्यकं नास्ति कदाचित्ते मया सह ।। ८९ ।।
नाहं युद्धमभीप्सामि न च मे प्रत्यनीकता ।
त्वं वृथैवाभ्यमित्रीयो बहुधाभीलमन्वभूः ।। ९० ।।
राज्यं मदीयमादत्स्व भोगान् भुक्त्वा च निर्वृणु ।
रोगशोकभयस्थानं युद्धोद्योगं तु संवृणु ।। ९१ ।।
इतस्त्वावेदितोऽमात्यैः काशीराजः पुनः पुनः ।
देव ! कोशलभूपालः पुरान्निःसार्यतां बहिः ।। ९२ ।।
दण्डताडं प्रताड्यासौ चौरघातं विघात्यताम् ।
कुटिलः सरलानस्मान् प्रतार्यानिव मन्यते ।। ९३ ।।

भृशं मन्त्रिभिरुक्तोपि शीलवान् काश्यधीश्वरः ।
अभियोक्तु समर्थोऽपि तितिक्षां प्रत्यपद्यत ।। ९४ ।।
स्वैरं वैरायमाणानामपि वैरं परित्यजन् ।
निग्रहापेक्षया मेने साधीयांसमनुग्रहम् ।। ९५ ।।
अमन्दचन्दनस्पन्दशीतलः शीलवानिन ।
भावयामास भव्योऽसावमित्रेष्वपि मित्रताम् ।। ९६ ।।
मनसा कर्मणा वाचा योऽनुगृह्णाति जन्तुषु ।
प्रतीपेष्वपि सद्बुद्धिरसौ केनोपमीयताम् ।। ९७।।
न्यषेधीत् प्रत्यवस्कन्दमनिन्द्यगुणवन्दितः ।
शीलवानुत्तमप्रज्ञः सानुक्रोशो नराधिप. ।। ९८ ।।
सचिवाः शक्तिमन्तोपि राज्ञः शीलवतः स्फुटम् ।
आदेशमनुरुध्यन्तः प्रतिरोधं न चक्रिरे ।। ९९ ।।
अत्रान्तरे स दुर्वृत्तः कोशलेशः समुत्पतन् ।
अपावृत्य पुरद्वाराण्यध्यतिष्ठन्नृपासनम् ।। १०० ।।
वाराणसी प्रविष्टेन ससैन्येनापि सर्वतः ।
कोशलाधीश्वरेणैक्षि प्रतिरोधी न कश्चन ।। १०१ ।।
अहिंसाया इवादर्शं दर्श दर्शमनुत्तमम् ।
हिंसाप्रतिकृतिः साक्षात् कोशलेशो विसिष्मिये ।। १०२ ।।
अमात्यानां सहस्रेण काशीशः परिवेष्टितः ।
शशी तारागणेनेव रेजे सम्पूर्णमण्डल ।। १०३ ।।
वीतशोकभयक्रोधः स्थिरधीर्मुनिराडिव ।
तटस्थः सन्नवैक्षिष्ट कोशलेश्वरचेष्टितम् ।। १०४ ।।
कृतान्त इव दुर्दान्तो कृतान्तःपुरमर्दनः ।
नृशंसः कोशलाधीशः स्वभृत्यानित्थमादिशत् ।। १०५ ।।

गम्यतां काश्यधीशोऽयं सामात्यो विनिगृह्यताम् ।
हस्तबन्धं निबध्याथ श्मशानं प्रति नीयताम् ॥ १०६ ॥
सैकते तत्र नीत्वाशु तथा साधु निखायताम् ।
हस्तं चालयितुं शक्तो न स्याद् येनैकमप्ययम् ॥ १०७ ॥
रजन्यामेनमाक्रम्य भक्षयिष्यन्ति जम्बुकाः ।
करिष्यन्ति च तत्सर्वं यदन्यत् तैश्चिकीर्षितम् ॥ १०८ ॥
कोशलेशभुजिष्यास्तु काशीशं लब्धमन्त्रणाः ।
समन्त्रिणं क्षमाशील ययुराबध्य हस्तयोः ॥ १०९ ॥
तदानीं स महाराजः शीलवान् विगतस्मयः ।
न स्तोकं मनसाऽप्यद्वेड् दृष्टवा प्रद्विषतोपि तान् ॥ ११० ॥
प्रतिचिस्करिषा तस्य नैव चेतस्यजागरीत् ।
निर्वैरा मन्त्रिणश्चासन् यथा राजा तथा प्रजाः ॥ १११ ॥
सामर्थ्ये सत्यपि प्राप्ता बन्धनं मन्त्रिणः समे ।
प्रतिकूलं वचो नोचू राज्ञ आज्ञानुकारिणः ॥ ११२ ॥
जिष्णुः प्रियकरा धीरा गम्भीराम्बुनिधेरिव ।
अविगीता विनीतासीत् परिषत् तस्य भूपतेः ॥ ११३ ॥
नोदियाय मतिस्तेषां सचिवानां विरोधिनी ।
राज्ञः शीलवतः शीलमेकान्तेनावबोधिनी ॥ ११४ ॥
श्मशानं प्रापिपन् भृत्याः सामात्यं काश्यधीश्वरम् ।
तस्योपकण्ठे चाकण्ठं बृहद्गर्तमखानिषुः ॥ ११५ ॥
मध्येगर्त महाराजं यथावदवखाय ते ।
तमेव परितः शेषानमात्यान् न्यखनन् पुनः ॥ ११६ ॥
बहिरन्तः समन्ताच्च तस्य गर्तस्य भूयसीः ।
सिकताः संप्रपूर्यायोघनेनाहसताधिकम् ॥ ११७ ॥

एवं गतेपि काशीशः शीलवान् सशितव्रतः ।
अभ्यधत्त निजामात्यानिदं कल्याणकृद् वचः ॥ ११८ ॥

भद्राः सौम्याः प्रियामात्याः आहृत्याहं ब्रवीमि वः ।
भवद्भिः सत्त्वसम्पन्नैः स्थेयमव्याकुलेन्द्रियैः ॥ ११९ ॥

गत्वरैरसुभिः कार्यं न प्राणव्यपरोपणम् ।
सत्वरं सुत्वरैर्भाव्यं प्रतिहिंसाविजित्वरैः ॥ १२० ॥

न चोरंकारमाक्रोश्यः प्रत्यर्थी कोशलाधिपः ।
कदाचिन्नाप्यमित्रीयाऽसूयेर्ष्या वानुचिन्त्यताम् ॥ १२१ ॥

मैत्र्येव भावनीयेष्टा सदा चित्तप्रसादनी ।
न योद्धव्यं विरोद्धव्यं क्रोद्धव्यं वा कृतात्मभिः ॥ १२२ ॥

अयमात्मैव सर्वत्र मन्तव्यः सततातततः ।
द्रष्टव्यः श्रवणीयश्च विज्ञेयः शास्त्रसंमतः ॥ १२३ ॥

सच्चिदानन्दरूपत्वादस्य शत्रुर्न विद्यते ।
व्युद्यते नाम विद्वद्भिर्देहोद्भेदस्तु भिद्यते ॥ १२४ ॥

संभिन्नमात्मनात्मानं मत्वा तस्मादनारतम् ।
उदासीनवदासीनैः कार्यं कार्यं विचक्षणैः ॥ १२५ ॥

इत्यादिशत एवास्य मध्यरात्रे समागते ।
शृगालाः समुपाजग्मुर्मनुष्यामिषजग्धये ॥ १२६ ॥

तान् विलोक्यागतान् राजा सचिवैः सह तत्क्षणम् ।
उच्चैःस्वरेण रोरूयांचक्रे कृतविभीषिकः ॥ १२७ ॥

हस्तपादप्रतिस्तब्धाः प्रतिरोद्धुं न तेऽशकन् ।
केवलं शब्दमात्रेण तान् शृगालानबीभयन् ॥ १२८ ॥

फेरवस्तु रवं श्रुत्वा पूर्वं प्राद्रुद्रुवन् भयात् ।
पुनर्निवर्त्य चोपेयुरदृष्ट्वा पृष्ठतःसरम् ॥ १२९ ॥

वीक्ष्य तान् पुनरप्युच्चैरशब्दायन्त तेऽखिलाः ।
क्रोष्टारोपि भयत्रस्ताश्चक्रिरे त्रिर्गतागतम् ।। १३० ।।

अदृष्टपृष्ठानुसरा ह्यन्ततस्ते समन्ततः ।
शृगाला निर्भयाः सन्तो न पलायिषतामुतः ।। १३१ ।।

इत्थं चाचकलन् नैभिः पुम्भि. किञ्चित्करिष्यते ।
दण्ड्यत्वादत्र निक्षिप्तैरिति कृत्वावतस्थिरे ।। १३२ ।।

अथ गोमायुषु स्वामिने काश्यधीश्वरमभ्ययात् ।
अन्ये गोमायवर्श्चेयुरमात्यान् मांसगृध्नवः ।। १३३ ।।

जम्बुकाधिपमायान्त दृष्ट्वा भूपस्तु नीतिमान् ।
ग्रीवां तथा चकारोर्ध्वां यथासौ भक्षयेदिति ।। १३४ ।।

क्रोष्टाप्यवसरं लब्ध्वा तद्ग्रीवामत्तुमुद्यतः ।
बलान्निजगृहे राज्ञा स्वहन्वाकृष्य यन्त्रवत् ।। १३५ ।।

हस्तिवर्चससम्पन्न. पार्थिवो हनुयन्त्रितम् ।
बलवत्पीडयामास क्रोष्टारं श्लथविक्रमम् ।। १३६ ।।

अभून्मोचयितु फेरुः प्रभोरात्मानमप्रभुः ।
त्रस्तो मृत्युभयादुच्चैराचक्रन्द विनिन्दितम् ।। १३७ ।।

आर्तमाक्रन्दनं श्रुत्वा तस्य क्रोष्टुशिरोमणेः ।
शृगालाः सकला अन्ये पलायन्त भयाकुलाः ।। १३८ ।।

क्ष्माभृद्यन्त्रितगोमायुकृतभूमिविघर्षणात् ।
शिथिलाः समपद्यन्त सिकता गर्तसश्रिताः ।। १३९ ।।

राज्ञा विज्ञेन तज्ज्ञात्वा शैथिल्यं सिकतोद्भवम् ।
शृगालः स परित्यक्तो चाल्येतां च करावुभौ ।। १४० ।।

इतस्ततस्तदान्दोल्य स्वं हस्तयुगलं नृपः ।
कृतयत्नो बहिर्गर्तादव्यथ्यो निरचिक्रमत् ।। १४१ ।।

गर्तस्योपर्यवष्टभ्य हस्तयुग्मं महाबलः ।
नचिरात्पवनध्वस्तमेघाच्चन्द्र इवोद्गतः ॥ १४२ ॥

निष्क्रान्तः स स्वयं गर्तात् सुधीः श्रान्तो महीपतिः ।
सिकता अपसार्यान्यान् सचिवानप्यजीजिवत् ॥ १४३ ॥

उद्धृत्य मन्त्रिणः सर्वान् गर्तात् पितृवनस्थितात् ।
समवेतः समस्तैस्तैः स क्षोणीभृदवास्थित ॥१४४ ॥

अत्रान्तरे जनाः केचिन्मृतमानीय मानवम् ।
सीमामध्ये परित्यज्यायासिषुर्यक्षयोर्द्वयोः॥ १४५ ॥

तौ यक्षौ तं गतप्राणं पुरुषं खादितुं मिथः ।
नाभूतां संविभज्यालमुभौ तुल्यपराक्रमौ ॥ १४६ ॥

ताभ्यामचिन्ति नैवावां स्वो विभक्तुमलं स्वयम् ।
विगतासुममु मर्त्यमत्तुं वा निरवग्रहम् ॥ १४७ ॥

एषोस्ति शीलवान् राजा न्यायकारीति विश्रुतः ।
तत्र गत्वानुयोक्तव्यं साध्वेनं स विभक्ष्यति ॥ १४८ ॥

एवं विचिन्त्य तौ यक्षौ मृतमादाय पादयोः ।
विकर्षन्तावयासिष्टां राज्ञः शीलवतोऽन्तिकम् ॥ १४९ ॥

अब्रूतां च महाराज ! धार्मिकस्त्वं मतोसि नौ ।
विभज्यायं यथान्यायमावाभ्यां सम्प्रदीयताम् ॥ १५० ॥

शीलवांस्त्वगदद् दक्षस्तदा क्षोदक्षमं वचः ।
संविभक्ष्यामि वां भक्ष्यमिमं न्यायेन मानवम् ॥ १५१ ॥

किन्तु दूषितगात्रोऽहं सिकतारेणुरूषितः ।
निर्मलं जलमिच्छामि स्नातुमात्मविशुद्धये ॥ १५२ ॥

अवदातवपुर्भूत्वा सत्यं वच्मि वचोऽमृतम् ।
विभज्याहं प्रदातास्मि युवाभ्यामसुकं मृतम् ॥ १५३ ॥

अत आनीयता तोय मम स्नानाय निर्मलम् ।
शुचीभूय करिष्यामि युवयोः कार्यमादरात् ।। १५४ ।।

कर्णशष्कुल्यवच्छिन्ननभसाऽऽकर्ण्य वर्णितम् ।
राज्ञः कार्यार्थिनौ यक्षौ बद्धकक्षौ बभूवतुः ।। १५५ ।।

कोशलाधीश्वरावास शीघ्रमीयतुरन्तिकम् ।
सुगन्धि सलिलं तोयं तत्रैक्षेतां च निर्मलम् ।। १५६ ।।

तिष्ठति स्म समाक्रम्य काशी कोशलभूपतिः ।
यद्राजः शीलवांस्तेन बहिरुत्सारितो बलात् ।। १५७ ।।

तत्र गत्वा पुरे यक्षौ निजमायाबलेन तौ ।
कोशलाधीशससेव्यं जलमाजह्रतुर्नतौ ।। १५८ ।।

तदानीतेन शीतेन सलिलेन सुगन्धिना ।
स्नातो निर्णिक्तगात्रोऽभूद् भूपतिः शीलवांस्ततः ।। १५९ ।।

तस्यैव कोशलेशस्य भवनादाहृतान्यथ ।
अददातां महार्हाणि राज्ञे वासांसि तावुभौ ।। १६० ।।

निर्वर्तिताभिषेकाय धारितोज्ज्वलवाससे ।
सुगन्धद्रव्यमंजूषामाहृषातां च मंजुलाम् ।। १६१ ।।

चन्दनागुरुकस्तूरीकुङ्कुमादिसमुद्भवः ।
गन्धश्चतुर्विधो यत्र स्फुरति स्म निरन्तरम् ।। १६२ ।।

पुनः स्नातानुलिप्ताय स्थितानि मणिभाजने ।
सुरभीणि प्रसूनानां गुच्छान्यच्छान्ययच्छताम् ।। १६३ ।।

सर्वमेतदनुष्ठाय शीलवन्तमपृच्छताम् ।
आवां किमधुना कुर्वः श्रीमतोदीर्यतामिति ।। १६४ ।।

राजोवाच ममेदानीमशनाया प्रवर्तते ।
भोक्तुमिच्छाम्यहं किञ्चिद् भोज्यमानीयतामिति ।। १६५ ।।

तावत्येव गतौ यक्षौ कोशलेश्वरसंश्रयम् ।
तत्र चापश्यतां भोज्यं प्राज्यव्यञ्जनसंधितम् ।। १६६ ।।

साधितं कोशलार्थं यत्तदन्नं सुपरिष्कृतम् ।
षड्रसं रुच्यमास्वाद्यं नृपायाहरतामुभौ ।। १६७ ।।

स्नात्वा शुद्धोऽनुलिप्ताङ्गः शुभवासाः स्वलंकृतः ।
प्रसन्नहृदयो राजाऽभुङ्क्त भोज्यमुपस्कृतम् ।। १६८ ।।

क्षोदीयसो नृशंसस्य यक्षो कोशलभूभृतः ।
हिंसावृत्तेरवस्कन्तुः पुनर्वेश्मनि जग्मतुः ।। १६९ ।।

राज्ञे शीलवते स्वादु सुगन्धि विमलं जलम् ।
उदकुम्भीं सुवर्णस्य शरावांश्चोपनिन्यतुः ।। १७० ।।

पीतं स्फीतं जलं राज्ञा क्षालितं च मुखादिकम् ।
अथोपाहारि यक्षाभ्यां ताम्बूलं सौरभान्वितम् ।। १७१ ।।

सुगन्धः पञ्चधौ यस्मिन्नुल्ललासातिसुन्दरः ।
यथेष्टं रसयित्वा तत् प्रकामं पिप्रिये नृपः ।। १७२ ।।

स्वस्थे राजनि संवृत्ते यक्षौ पप्रच्छतुः पुनः ।
सेवामावां विदध्याव कामन्यामित्युदीर्यताम् ।। १७३ ।।

नृपः प्राह मदीयायां राजधान्यां प्रयायताम् ।
खड्गो मांगलिकस्तस्माद् द्रुतमानीयतां पुरात् ।। १७४ ।।

असिना तेन कर्ताहे शवस्यास्य विभाजनम् ।
भक्षयित्वामिषं येन युवामामोदमाप्स्यथः ।। १७५ ।।

क्षिप्रमानिन्यतुः खड्गं तौ महीपतिचोदितौ ।
को विलम्बः समर्थानां नियोज्यानां क्रियावताम् ।। १७६ ।।

खड्गमादाय हस्तेन राज्ञा शीलवता ततः ।
मृतकस्यावदानाय सत्वरं समनह्यत ।। १७७ ।।

शवः स ऊर्ध्वमुत्थाप्य संमुखीनो व्यधीयत ।
अवादीयत खड्गेन पुनर्मस्तकमध्यतः ॥ १७८ ॥
समं खण्डद्वयं कृत्वा यक्षाभ्यां संव्यभज्यत ।
शस्त्रं तद्रक्तसंश्लिष्टं सलिलेनोदमृज्यत ॥ १७९ ॥
यथास्वं संविभागेन तौ यक्षौ गतमत्सरौ ।
प्राश्य मांसं मनुष्यस्य नितान्तं मोदमापतुः ॥ १८० ॥
प्रहृष्टावन्वयुञ्जातां शीलवन्तं क्षमाभृतम् ।
परिचर्यास्मदर्हान्या महाराजोच्यतां त्वया ॥ १८१ ॥
श्रीमता साधितं तावदस्मत्कार्यमभीप्सितम् ।
आवाभ्यामपि तेऽभीष्टं किञ्चित्कार्यं विधीयताम् ॥ १८२ ॥
उवाच शीलवान् यक्षो युवां स्थः शक्तिशालिनौ ।
निजशौर्यप्रतापेन नयतं मां मदाश्रयम् ॥ १८३ ॥
साम्प्रतं कोशलाधीशस्तदाक्रम्यावतिष्ठते ।
तदीयशयनागारे युवां प्रापयतं हि माम् ॥ १८४ ॥
इमे च सचिवाः सर्वे प्राप्याः स्वं स्व गृहं प्रति ।
इत्येवास्त्यभिलाषो मे युवाभ्यामेष पूर्यताम् ॥ १८५ ॥
प्रतिपद्य तथैवेति यक्षावुक्तं वितेनतुः ।
राजान शयनागारे तदानीमेव निन्यतुः ॥ १८६ ॥
तत्रादर्शि नृपेणेत्वा यामिन्यां कोशलेश्वरः ।
शयितोऽसंशयं शय्यामधिशय्य दुराशयः ॥ १८७ ॥
वपुः शीलवतास्पर्शि स्वपतोस्यासिकोटिना ।
शय्योत्थायमसौ भीतोऽभवत्सभ्रान्तलोचनः ॥ १८८ ॥
प्रदीपस्य प्रकाशेन शीलवन्तं विलोक्य सः ।
संजातप्रत्ययो कस्मादेतमेतमवोचत ॥ १८९ ॥

अगारे पिहितद्वारे निरुद्धे द्वाररक्षके ।
उद्यतासिः कथं रात्रावत्र शत्रुवदाक्रमीः ॥ १९० ॥
असूचयित्वा मां पूर्वमनापृच्छ्य च यामिकान् ।
कथकारमिहार्येण भवतागमनं कृतम् ॥ १९१ ॥
इति कोशलभूपस्य श्रुत्वा वाक्यं सविस्तरम् ।
शीलवानप्यतिक्रान्तं स्ववृत्तान्तमवर्णयत् ॥ १९२ ॥
त्वयाहं सरुषाऽऽक्रान्तः प्रत्युक्तः परुषाक्षरम् ।
सामात्यस्त्याजितः काशीं श्मशानं चैव लम्भितः ॥ १९३ ॥
साधीयसी न हिंसा ते यथा कार्यमकार्यथाः ।
तितिक्षामवलम्ब्याहं विपदस्ता विसोढवान् ॥ १९४ ॥
न तितिक्षासमं किञ्चिदस्ति साधनमुत्तमम् ।
तितिक्षानावमारुह्य तीर्यास्त्वं विपदापगाः ॥ १९५ ॥
इति काशीश्वरस्यादो निपीय वचनामृतम् ।
अमन्दानन्दपाथोधौ न्यमाङ्क्षीत् कोशलेश्वर. ॥ १९६ ॥
भूयः पुलकितो भूत्वा शीलवन्त जगाद सः ।
नाहं वेद महत्त्वं ते भवानतिमहान् मतः ॥ १९७ ॥
भवन्नपि मनुष्योऽहं न जाने तव सद्गुणान् ।
एतौ मांसाशिनौ यक्षावपि वित्तस्तरां हि यान् ॥ १९८ ॥
बालिशत्वादहं तावदेतावन्तमनेहसम् ।
तुभ्यमद्रुह्यमक्रुध्यं तदागो मम मृष्यताम् ॥ १९९ ॥
नातः परतर श्रीमन् ! त्वामभिद्रोहितास्म्यहम् ।
प्रत्यहं भावयिष्यामि गुणानेव तवाद्भुतान् ॥ २०० ॥
श्रीमान् धीमान् मया ज्ञातो वस्तुतः शीलवान् भवान् ।
अह नराधमो नूनं मन्ये त्वां पुरुषोत्तमम् ॥ २०१ ॥

इत्याद्युक्त्वा गृहीतासिर्द्वेषायाशयतासुकः ।
क्षमयित्वा च राजानं शय्यायां तमसूषुपत् ।। २०२ ।।
स्वयञ्च खट्विकां लघ्वीमधिशय्याशयिष्ट सः ।
नम्रता कम्रतां लेभे हिस्रस्याहिसकं प्रति ।। २०३ ।।
प्रत्यूषे कोशलाधीशस्त्यक्तविद्वेषभावन· ।
लब्धकाशीशसौहार्दो जजागारात्मपावनः ।। २०३ ।।
सैनिकान् सचिव्रान् विप्रान् सर्वांश्च गृहमेधिनः ।
एकीकृत्य समज्यायां विज्ञानित्थमजिज्ञपत् ।। २०५ ।।
श्रूयतां पारिषद्या भो· ! शीलवानेष पुण्यवान् ।
सद्गुणाभरणः श्रीमान् काशीराजो विराजते ।। २०६ ।।
मया कोशलभूपेन प्रजा अस्य विनिघ्नता ।
अत्यर्थं क्लेशितो राजा काशीमाक्रामता सता ।। २०७ ।।
अहिसावृत्तिनानेन नाहं हिस्रोपि हिंसितः ।
दयावताऽवता लोकान् मदिच्छापूरि सूरिणा ।। २०८ ।।
अहमस्य गुणान् वक्तुं नैव शक्नोमि मन्दधी. ।
अनेन साधुशीलेन घातुको ऽहं पराजित· ।। २०९ ।।
एवमभ्यर्हितं याचे दोषो मे क्षम्यतामिति ।
स्वञ्च वाराणसीराज्य कृपया गृह्यतामिति ।। २१० ।।
न कदापि करिष्येऽहं दुश्चेष्टां पुनरीदृशीम् ।
परद्रव्यापहारो हि मरण प्राणिनां ध्रुवम् ।। २११ ।।
इत्यावेद्य तदैवासौ कोशलेशः कृताञ्जलिः ।
काशीराज्यं समर्प्यैनं विनयावनतोऽब्रवीत् ।। २१२ ।।
अद्य प्रभृति हे राजन् ! भवद्राज्यस्य सेवकः ।
अहमेव भविष्यामि तस्कराणां निरीक्षकः।। २१३ ।।

अहं दौवारिको भूत्वा सेविष्ये त्वामहर्दिवम् ।
राजीभूय भवान् भूयः पृथिवीमनुशास्त्विमाम् ।। २१४ ।।

(द्रुतविलम्बितवृत्तम्)

विमलकीर्तिरुदारमतिर्भवान्
अनुचित क्षमतां मम दुष्कृतम् ।
क्षितिपतेस्तव सेवकतामितः
सुहृदहं हृदहङ्कृतिवर्जितः ।। २१५ ।।

एवं निर्वर्त्य सत्कार्यं सत्कार्य च महीपतिम् ।
अभिवाद्य निवृत्तोसौ ससैन्यः कोशलेश्वरः ।। २१६ ।।

(तोटकवृत्तम्)

तदनन्तरमेव शठः सचिवो
नृपयोरुभयोरपि ह्यनिकरः ।
समदण्ड्यत कोशलभूपतिना
न सुखेन हि तिष्ठति दुष्टजनः ।। २१७ ।।

# पञ्चमः सर्गः

(भुजंगप्रयातवृत्तम्)

पुरे प्राचि वाराणसीनाम्न्युदात्ते
भुवं शासति श्रीमति ब्रह्मदत्ते ।
मनुष्यास्त्रयो जंगले लांगलेन
कृषन्ति स्म भूमीमकृष्टामदुष्टाः ॥ १ ॥

कदाचित् मुषित्वा जनान् राजभीता
धनं तद्वन दस्यवः सम्प्रविष्टाः ।
प्रयत्ने कृतेऽप्यप्रतीता गृहीता
न ते राजकीयैर्नृभिः प्रद्रवन्तः ॥ २ ॥

उपेत्याटवी तां ततो राजलोका
महीं कर्षतो नन् विलोक्येदमूचुः ।
अरे दस्यवो यूयमस्मान् प्रतार्य
कृषन्तोऽवनिं कर्षकाः सम्प्रति स्थ ॥ ३ ॥

तदाऽतस्करत्वेपि तेषां त्रयाणा-
मभूद् दस्युसन्देह एवाविशेषात् ।
समाने वने हन्त काले समाने
*भवेद् राजकीया जनाः संशयीरन् ॥ ४ ॥

---

*'पश्य मृगो धावति' इतिवत् संशयो भवतिक्रियायाः कर्त्ता बोध्यः ।

सदोषोऽस्त्यय दोषहीनोऽथवेति
प्रतीयेत संदिग्धहेतोः कथं नु ?
यतो वस्तुतस्तस्करास्तु प्रनष्टाः
स्थितास्ते त्रयस्तत्र दुष्टाः प्रदिष्टाः ॥ ५ ॥

विनैवापराधं त्रयस्ते मनुष्या
गृहीतास्तथा संदिताः शृङ्खलायाम् ।
अनीयन्त पाटच्चरा अप्यसन्त-
स्तदा ब्रह्मदत्तान्तिकं राजलोकैः ॥ ६ ॥

इयत्यन्तरे काचिदागत्य योषा
ममाच्छादनं दीयतामित्यवोचत् ।
भृशं रोदनं कुर्वती सातिदुःखात्
परिक्रामति स्माभितो भूपवेश्म ॥ ७ ॥

निशम्यादसीयं तमाक्रोशमुच्चै-
र्महीपस्तदा ब्रह्मदत्तोऽभ्यधत्त ।
इयं कामिनी याचते यत् तदच्छं
मुदाच्छादनं वस्त्रमस्यै प्रदत्त ॥ ८ ॥

तदानीं सभोपस्थितः कश्चिदूचे
नहीयं प्रभो ! वस्त्रमिच्छुर्ब्रवीति ।
इयं कामुका केवलं स्वस्य पत्यु-
र्न चेच्छास्ति कुत्रापि वस्त्रान्तरेऽस्याः ॥ ९ ॥

अथ ब्रह्मदत्तेन पृष्टा पुनः सा
पतिं वांछसि त्वं किमाच्छादनं स्वम् ।
अवादीदसावेवमेवं हि देव !
स्वमाच्छादनं कामयेऽहं पतिं भोः ! ॥ १० ॥

ततः पृष्टवान् भूपतिर्ब्रह्मदत्त-
स्तदर्थं यथार्थं परीचिक्षिषुस्ताम् ।
इमे शृङ्खलाबन्धनं लम्भिता ये
मनुष्यास्त्रयः सन्ति के ते त्वदीयाः ॥ ११ ॥

त्वया वर्तते कोभिसम्बन्ध एषां
विजानासि कंचिन्न वा त्रिष्वमीषु ।
इति स्पष्टमाख्येयमार्ये ! निवार्ये
विचार्ये च कार्ये भवेन्नैव दोषः ॥ १२ ॥

तदाकर्ण्य कामिन्यसावाबभाषे
पतिभ्रातृपुत्रास्त्रयोऽमी भवन्ति ।
अमीषां ममैको मतो भ्रातृभूतोऽ
परो भर्तृभूतोऽपरः पुत्रभूतः ॥ १३ ॥

मदीयोऽभिसम्बन्ध एषोऽत्र राजन् !
अमीभिः सहास्तीति सत्यं ब्रवीमि ।
अतः कारणादागताच्छादनेच्छुः
प्रदातुं भवानर्हतीत्याशयाऽहम् ॥ १४ ॥

सहर्षं ततो भूपतिर्वाक्यमाख्यत्
प्रसीदामि ते वाचमाचम्य देवि !
त्वया सत्यमुक्तं यथेच्छं त्वमेकं
गृहाणैषु तुभ्यं प्रयच्छामि तुष्टः ॥ १५ ॥

प्रदेया न सर्वे मयैते भवन्ति
गृहाणैकमेषु प्रसन्ने मयि त्वम् ।
इदं भूपवाक्यं निशम्यातिपट्वी
तदा सांगनेमां गिरं व्याजहार ॥ १६ ॥

त्रयोऽमी प्रदातुं त्वया चेन्न शक्या-
स्ततः किं प्रकुर्यामहं मन्दभाग्या ।
यदि त्वं प्रसन्नोऽसि हे भूपते ! तन्
मदीयं प्रियं भ्रातरं सम्प्रयच्छ ॥ १७ ॥

न वांछाम्यहं कान्तमेकान्तकान्तं
न वा पुत्रमिच्छामि मत्प्रेमपात्रम् ।
प्रियं भ्रातरं सोदरं प्राप्य नित्यं
*सुखीस्यां बहु भ्रातृमत्येव भूत्वा ॥ १८ ॥

महीपस्तु योषिद्वचस्तन्निपीय
प्रहृष्टस्तथा विस्मितः सन् न्यगादीत् ।
कथं भर्तृपुत्रौ विहाय त्वमेकं
प्रियं भ्रातरं केवलं वांछसीति ॥ १९ ॥

स्त्रियोक्तं पुनर्भर्तृपुत्राः प्रकामं
सुखेनाप्तुमर्हा भवन्तीह लोके ।
परं भ्रातरः सर्वथा दुर्लभाः स्यु-
रतः सोदरं भ्रातरं कामयेऽहम् ॥ २० ॥

न मे भर्तृकाम्या न वा पुत्रकाम्या
तथास्ति प्रकृष्टा यथा भ्रातृकाम्या ।
अतो भ्रातृकाम्याम्यहं सानुरागा
सदा भ्रातृमत्येव भूयः सुखीस्याम्* ॥ २१ ॥

ममोत्सङ्गजाः संभवन्त्यङ्ग ! पुत्राः
पतिश्चापि लभ्यः कुतश्चिद् व्रजन्त्याः ।

---

*च्विप्रत्यये पुंवद्भाव एष्टव्यः । अथवा सुखं प्राप्नुयां भ्रातृमत्येव भूयः' इति चतुर्थश्चरणोऽस्तु ।

परं तं न पश्यामि देश नु यस्मिन्
अहं प्राप्नुयां सोदर भ्रातरं स्वम् ।। २२ ।।

क्व लभ्यस्त्रिलोक्यामपि भ्रातृरूपः
स्फुटं पुत्रदारेषु सत्स्वप्यमीषु ।
इमामुद्गिरन्ती गिरं वीक्ष्य योषां
प्रहर्षप्रकर्ष ववर्षाशु भूपः ।। २३ ।।

प्रशंसन् मुहुस्तामथोवाच वाचं
त्वया सर्वथा सत्यमेवेदमुक्तम् ।
न लभ्यः क्वचिद् भ्रातृतुल्योऽपि लोके
प्रियं भ्रातृरूपं तु नाहं विलोके ।। २४ ।।

अतो युक्तरूपास्ति ते भ्रातृकाम्या
निकामं त्वदीया मनीषापि रम्या ।
ध्रुवं वस्तुतत्वं समुद्बोधितोऽहं
प्रसन्नाननस्त्वत्प्रियं कुर्तुमीहे ।। २५ ।।

सुतभ्रातृभर्तृनतस्त्रीनपि त्वं
स्वसम्बन्धिनोऽमून् प्रसन्ना गृहाण ।
इति प्रोच्य कारागृहात् तान् मनुष्यांस्
तदोन्मुच्य तामार्पिपद् भूमिपालः ।। २६ ।।

प्रहृष्टा सुतभ्रातृभर्तॄन् गृहीत्वा
स्वकीयं ययौ धाम सीमन्तिनी सा ।
प्रसादं महीपस्य मत्वा विशिष्टं
प्रकृष्टं सुखं प्रापदापद्विमुक्ता ।। २७ ।।

अहो भ्रातुरत्रास्ति कीदृङ् महत्वं
प्रमोदास्पदत्वं तथा दुर्लभत्वम् ।

स्त्रियो वात्मजा वा प्रियाः सन्तु कामं
परं भ्रातरः क्वानुजा वाग्रजा वा ॥ २८ ॥

अमुष्या रमण्या निशम्य प्रवृत्तिं
मुदाकृष्यत ब्रह्मदत्तोऽपि भूपः ।
कृता येन सर्वेऽपि ते भ्रातृहेतोः
सपद्येव कारागृहान्मुक्तबन्धाः ॥ २९ ॥

इयं स्त्री यथैतर्हि जन्मन्यमीषा-
मभूद् बन्धदु खाय हन्त्री समेषाम् ।
तथा *भ्रातुरेषान्तरेण प्रियस्य
स्वतोऽमूमुचद् दुःखतो नृन् पुरापि ॥ ३० ॥

अतः साधु मन्यामहे निर्विवादं
स्थिरं भ्रातुरुच्चैः प्रशस्तिप्रवादम् ।
नहि भ्रातरः सन्ति लभ्याः सुखेन
सदा बोध्यमेतत्कथाया मुखेन ॥ ३१ ॥

कथैषातिलघ्वी मनो मोदयन्ती
विशिष्टामभीष्टाञ्च शिक्षां ददाति ।
प्रसिद्धः स बुद्धो महात्मा जगत्या-
मिदं वस्तु शास्तेत्यभिख्यः प्रशास्ति ॥ ३२ ॥

अरे मानवाः ! यूयमत्रावधत्त
स्वकीयं चरित्रं पवित्रं विधत्त ।
सह भ्रातृभिर्मा स्म विगृह्णतालं
यतो दुर्लभा भ्रातरः सर्वकालम् ॥ ३३ ॥

---

*अत्रान्तर शब्दस्य तादर्थ्यमर्थः । भ्रातुरन्तरेण भ्रात्रर्थमित्यर्थः ।

असौ मेघनादस्य शक्ति प्रतिघ्नन्
यदा लक्ष्मणो मूर्च्छितोभूच्चिराय ।
तदा तद्वियोगाद् भृशं दुःखतप्तः
किमाह स्म रामः स्मृतभ्रातृधर्मा ।। ३४ ।।

गृहस्त्रीसुतश्रीशरीरादि सर्व
पुनश्चापि लभ्यं भवेद् द्रागखर्वम् ।
अलभ्यो मकद्भ्रातृकः सोदरः स्याद्
इदं सूचयत्येव रामायणं नः ।। ३५ ।।

इयान् दुर्लभो भ्रातृभावो यदेषा
निजं भ्रातरं क्रामयामास योषा ।
अतो भ्रातृमद्भिः सदा पुण्यवद्भि-
र्भवाद्भिश्च सद्भिः सुखं लम्भनीयम् ।। ३६ ।।

( मालिनीवृत्तम् )

अतिशयरमणीयं गौरव भ्रातृतायाः
कथितमिह कथायां दुर्लभत्वं च भूयः ।
सति महति कुटुम्बेऽप्येषणीयाः-स्वकीयाः
सततमसुलभास्ते भ्रातरो वन्दनीयाः ।। ३७ ।।

# षष्ठः सर्गः

( उपजातिवृत्तम् )

विशुद्धबुद्धिर्भगवान् महात्मा बुद्धः प्रसिद्धो जगतीतलेऽभूत् ।
धर्मं प्रशासद् विधिवच्चकासद् भिक्षूनशेषान् निजशासनस्थान् ॥ १ ॥

तत्रैकदा कश्चन भिक्षुसंघे युवा विनेयो विनयोपपन्नः ।
भिक्षुः सुभिक्षार्थमटाट्यमानः श्रावस्त्यभिख्यां नगरीं प्रयातः ॥ २ ॥

तस्यां कुमारश्रमणः स पुर्यां भिक्षामुपादाय निवर्तमानः ।
अलंकृतां रूपवतीं तदेकामेकान्तरम्यां युवतिं ददर्श ॥ ३ ॥

विलोक्य तां लोचनलोभनीयां मनोज्ञरूपां तरुणीमकस्मात् ।
गृहीतशिक्षोपि परं स भिक्षुर्नालं मनः संयमने बभूव ॥ ४ ॥

विक्षिप्तचेताः स्वनिकेतनस्थः कामातुरोऽसौ बुबुधे न किञ्चित् ।
प्रमुग्धगीतध्वनिलुब्धशल्यप्रविद्धसारंग इवावतस्थे ॥ ५ ॥

निरन्तरं चिन्तयतोऽस्य योषां सुभूषिताङ्गीं नवयौवनस्थाम् ।
अह्नाय नष्टद्युति पीतवर्णं वक्त्रं वपुश्चैदतिदुर्बलत्वम् ॥ ६ ॥

म्लानं मनोऽभून्मलिना मनीषा तेजोऽखिलं चाजरदिन्द्रियाणाम् ।
रागातिरेकेण तदेकवृत्तेर्ध्वस्ता समस्तात्मपवित्रतापि ॥ ७ ॥

धर्मोपदेशोप्यरुचन्न चारुः सर्वात्मना स्त्रीप्रसितस्य तस्य ।
नितान्ततान्तस्य मनःसमाधिः कुतस्तु कामोपहतस्य सिध्येत् ॥ ८ ॥

सविस्मयं मस्करिणस्तमन्ये पप्रच्छुरेवं परिवृत्तरूपम् ।
कस्माद् वपुर्दुर्बलतामितं ते मुने ! मनश्चाप्यवसीदतीति ॥ ९ ॥

न सास्ति शान्तिर्मुदिता न कान्तिः, क्लान्तिस्तु वक्त्रे परिलक्ष्यते ते ।
किं कारणं ब्रूहि विहाय लज्जां येन त्वमेव परिबाध्यसे भोः ! ॥ १० ॥

तदावदद् भिक्षुरये वयस्या. ! युष्मास्ववाच्य नहि किंचिदस्ति ।
निशम्यतां तत्सकलं रहस्यं यतोतिमात्रं व्यथितोहमस्मि ॥ ११ ॥

मयाद्य दृष्टा रमणी प्रकृष्टा विशिष्टलावण्यवती प्रहृष्टा ।
अविप्रकृष्टेऽत्र पुरे निविष्टा सैवास्त्यभीष्टा हृदि मे प्रविष्टा ॥ १२ ॥

निभाल्य सौन्दर्यमयीमनिन्द्यां शुचिस्मिता तामनवद्यरूपाम् ।
उद्विग्नचित्तोस्मि लभे न शान्ति स्खलद्गतिः सम्प्रति सम्प्रतीति ॥ १३ ॥

शिरोमणिं तां पुरसुन्दरीणां चिर चिरण्टी कलहंसकण्ठीम् ।
गाढं परिष्वज्य रमेय भूयस्तदङ्गसंस्पर्शसुखं लभेय ॥ १४ ॥

इतीयमिच्छाद्य वरीवृतीति दु:खासिका चेतसि तन्तनीति ।
अतो विवर्ण वदन ममेद यूनोपि दूना च कृशाङ्गयष्टिः ॥ २५ ॥

न जायते तद्विषयैषिणो मे स्वधर्मशास्त्रश्रवणे प्रवृत्तिः ।
जानामि कामं फलसिद्धिवामं तथापि तस्मान्न च मे निवृत्तिः ॥ १६ ॥

निरस्तधैर्योहमुदीर्णरागः स्मरामि तामेव पुरः स्फुरन्तीम् ।
कामी स्वतां पश्यति सत्यमुक्तं कामातुराणां न भयं न लज्जा ॥ १७ ॥

चिन्तेयमन्धंकरणी निकामं प्रतिक्षणं मां विकलीकरोति ।
तस्मादनीशोस्मि मनोनिरोधे कथं प्रवर्तेय च धर्मबोधे ॥ १८ ॥

इत्यात्मनो वृत्तमुदीरयन्तं कर्मन्दिनो मन्दममुं व्यनिन्दन् ।
आत्मान्तिक तद्धितमिच्छवस्तु प्राबोधयन्मित्रमुदात्तचित्ताः ॥ १९ ।

अरे ! समाधेहि मनः स्वकीयं सखे ! सखेदं त्यज बुद्धिभेदम् ।
साधीयसीयं न मतिस्त्वदीया पथश्च्युतो मा स्म भवः कदाचित् ॥ २० ।

धर्मं शुभं शीलय वीतरागः श्रीबुद्धदेवोदितमात्मनीनम् ।
सन्त्यज्य योषिद्विषयानुरागं दृढं भजस्वोच्चतमं विरागम् ॥ २१ ॥

दुश्चिन्तयैवं परिबाध्यमानो वैराग्यमेवाभयमाश्रयस्व ।
शान्ति सुखं तृप्तिमवाप्तुकामो मुदा रमस्वात्मविचारणायाम् ॥ २२ ॥

दुःखेऽत्र लोके विषयानुषक्ते बुद्धस्य जन्मापि सुदुर्लभं हि ।
यस्योपदेशश्रवणान्मनुष्यो निरत्ययं सौख्यमनन्तमेति ॥ २३ ॥

पुण्यैरवाप्येह मनुष्ययोनिं स्व भिक्षुधर्म न विलोपय त्वम् ।
शास्त्रोक्तधर्माचरणान् महात्मन् ! जन्मोज्ज्वल निर्मलमातनुष्व ॥ २४ ॥

क्लेशप्रहाणाय विहाय सर्वान् सम्बन्धिनोऽत्रांग ! समागतोसि ।
कथ पुनः कामविकारदोषैर्वशीकृतो भिक्षुर्विरुद्धमेवम् ॥ २५ ॥

कीटात् प्रभृत्यापुरुषं समेषां साधारणः कामविकार एषः ।
ये त्वस्य वश्यत्वमुपाश्रयन्ते, भ्रश्यन्ति दुःख्यन्त्यनिशं भृशं ते ॥ २६ ॥

आपातरम्या विषयाः स्फुरन्तः समन्ततोन्ते परितापयन्ति ।
न बुद्धिमांस्तेष्वधिकं रमेत सुदुस्त्यजांस्तान् न च रोचयेत ॥ २७ ॥

विभान्त्यमी मांसलपेशलाश्च कंकालवत् कीकसनीरसाश्च ।
विभीषणाः सर्पफणोपमाश्च प्रभ्रष्टशाखोटफलोपमाश्च ॥ २८ ॥

ज्वलत्स्फुलिङ्गाः प्रदहन्ति कामं तृणोल्मुका यान्त्यचिरादपायम् ।
स्वप्नोपमाः सन्ति घनान्धकाराः कामादयोऽनिष्टकरा विकाराः ॥ २९ ॥

सुपुष्पिताः कण्टकिनः सदैते विमोहयन्ति व्यथयन्ति लोकम् ।
आपामरं सर्वगता विषिण्वन्त्यर्थाः स्वनर्था जनयन्ति शोकम् ॥ ३० ॥

नित्यप्रबुद्धस्य विशुद्धबुद्धेर्बुद्धस्य शिष्योपि भवंस्तपस्वी ।
स्त्रियाममुष्यां प्रसजन्न शस्यां क्षणं त्वमेतां विकृतिं गतोऽभूः ॥ ३१ ॥

तस्मादकस्मादुदितादमुष्मात् पापात्समस्याद्‌ विरमाशु भिक्षो ! ।
न शोभते ते विषयाभिलाषः भिक्ष्वाश्रमे तस्य कुतोऽवकाशः ॥ ३२ ॥

इत्येवमुक्तः स मुहुः सुहृद्भिस्तद् युक्तियुक्तं वचनं न मेने ।
आसीदशान्तस्तदवस्थ एव जहौ न योषाभिरतिं विमुग्धः ॥ ३३ ॥

तदोत्पथस्थं तमनैषुरन्ते श्रीबुद्धदेवान्तिकमप्रबुद्धम् ।
असौ तु शास्ता समुपागतांस्तान् दृष्ट्वेङ्गितज्ञः स्वयमेवमाख्यत् ॥ ३४ ॥
अशान्तचित्तं ननु भिक्षुमेन यूय समानीय समागताः स्थ ।
कामप्रवृत्त्योज्झितनित्यकृत्योऽनभ्याशमित्योऽयमितीव मन्ये ॥ ३५ ॥
ओमित्यवोचन्नथ भिक्षवोन्ये स्वामिन्नय स्त्रीविषयाभिलाषी ।
उद्भ्रान्तचेता विपरीतबुद्धिर्न शासने तिष्ठति बोधितोपि ॥ ३६ ॥
विवृद्धरागस्य गतोऽतिभूमिं कामोत्थितो ह्यस्य मनोविकारः ।
दत्त्वोपदेशं भवतानुकम्पा सम्पादनीयाऽत्र विशिष्य शिष्ये ॥ ३७ ॥
आकर्ण्य तच्छ्रीभगवान् स बुद्धः शुद्धामिमां वाचमवोचदुच्चाम् ।
शोच्यस्तु यद्यप्ययमस्ति भिक्षुस्तथापि निःश्रेयसमस्य वक्ष्ये ॥ ३८ ॥
विचार्यतामार्य ! पुरापि काले जितेन्द्रियाः सत्पुरुषा बभूवुः ।
ये नीचकामादिकवासनानामधीनतां नैव कदाप्युपायुः ॥ ३९ ॥
निसर्गतश्चेतसि सस्थितानां पदे पदे चानुभव गतानाम् ।
शक्यं न विज्ञैरपि वासनानां समूलमुन्मूलनमत्र कर्तुम् ॥ ४० ॥
महर्षयः शास्त्रविदस्तु पूर्वे विशुद्धसत्त्वाः शुभकर्मनिष्ठाः ।
विवेकतः सयमतश्च नित्य दुर्वासनानां व्यदधुर्निरोधम् ॥ ४१ ॥
अतो मनश्चञ्चलमस्थिरं सद् यदापि यस्मिन् विषयेपि यायात् ।
तदा ततस्तत् प्रसभं निरुध्य समादधीतात्मनि सर्वदैव ॥ ४२ ॥
त्वं चापि चित्तं विषये प्रसक्तं निरुन्धि धीरो भव साधुशीलः ।
विकारहेतौ न विकुर्वते ये धन्यास्त एवात्र समुल्लसन्ति ॥ ४३ ॥
कामस्य वेगं बलवन्निगृह्य त्वं नित्यसत्त्वस्थ इहाश्रमे स्याः ।
वशीकृते चेतसि सर्वकालं शान्तः स्वयं मोक्ष्यसि मोहजालम् ॥ ४४ ॥
यथा शुभे कर्मणि तत्परास्ते प्राचः पुरा कामवशं न जग्मुः ।
विरेजिरे संयमिनश्च सन्तस्तदेतदाख्यामि कथामुखेन ॥ ४५ ॥

पुरा पुरेऽरिष्टपुरे प्रशस्ते शिबिर्नृपो ऽभूच्छिबिराज्यसंस्थे ।
सम्यक् प्रजानां शिवमादधानः स्वं नाम योऽर्थान्वितमाततान ।। ४६ ।।

श्रीबोधिसत्त्वः किल तन्महिष्यां लेभे स्वयं जन्म विधेर्नियोगात् ।
शिबेः कुमारप्रतिमः कुमारः स मुख्यया ऽऽख्यामि तदाख्ययैव ।। ४७ ।।

सेनापतिर्यस्तु बभूव राज्ञो वशंवदः शूरवरो मनीषी ।
तस्यापि दारेष्वजनिष्ट दिष्टात् सूनुस्तदानीमहिपारकाख्यः ।। ४८ ।।

तद्दारकोसावहिपारकश्च शिबेर्महीपस्य कुमारकश्च ।
परस्परप्रीतिसमन्वितौ तौ शिशू सहैवावृधतां क्रमेण ।। ४६ ।।

जातौ यदा षोडशहायनौ तौ तदा पुरीं तक्षशिलामुपेतौ ।
शिल्पानि शास्त्राणि च शिक्षमाणौ बभूवतुः सर्वकलाप्रवीणौ ।। ५० ।।

शिक्षामुपादाय ततो निवृत्तावुपेयतुः स्वां प्रति राजधानीम् ।
लब्धाधिकारौ विधिवद् युवानौ स्वकं पदं पित्र्यमधिष्ठितौ च ।। ५१ ।।

शिबेरपत्यं नृपतिः कुमारः सिंहासनस्थो वसुधां शशास
युवा वपुष्मानहिपारकोऽपि सेनापतित्वेऽधिकृतो ललास ।। ५२ ।।

ख्यातिं गतस्तत्र पुरे धनाढ्यस्तिरीटवत्सेत्यभिधोऽप्युवास ।
प्रमाणभूतो व्यवहारशुद्धौ योऽशीतिकोटीश उदीर्यते स्म ।। ५३ ।।

इभ्यस्य सभ्यस्य मतस्य तस्य गेहेऽजनि श्रीरिव कन्यकैका ।
समुल्लसन्निर्मलदेहकान्तिर्याऽनिन्द्यबालेन्दुकलेव रेजे ।। ५४ ।।

सौन्दर्यमाधुर्यकिरा चकोरी स्फुरच्छरच्चन्द्रमुखी किशोरी ।
सौभाग्यवत्युत्पलकोमलाङ्गी विलक्षणा सोत्तमलक्षणाऽभूत् ।। ५५ ।।

भान्ती स्वरूपातिशयेन बाला सोन्मादयत्येव पुरेति मत्वा ।
तिरीटवत्सस्य सुतोन्मदन्तीत्यभिख्ययाऽख्यायत पुर्यमुष्याम् ।। ५६ ।।

प्रवर्धमाना वयसाभिरूपा सा षोडशीराप्य समाः कुमारी ।
स्वं मानुषं वर्णमुदस्य दैवाज्जाताऽप्सरस्तुल्यमनोज्ञरूपा ।। ५७ ।।

तदोन्मदन्ती कलिकाग्रदन्ती रति हसन्ती हृदयं हरन्ती ।
सर्वाञ्जनान् कामवशं नयन्ती देवाङ्गनेवास्त विमोहयन्ती ॥ ५८ ॥
तामुज्ज्वलां वंजुलमंजुलाङ्गीं समुच्छलद्यौवनचञ्चलाक्षीम् ।
आलोकमालोकमलं विमुग्धाः सर्वेपि कामोपहता बभूवुः ॥ ५९ ॥
तदङ्गलावण्यमवेक्ष्य लोका मैरेयपीता इव मोहमापुः ।
भृशं प्रमत्ता बत नष्टचित्ताः कामोपसृष्टा न किमप्यवापुः ॥ ६० ॥
दृष्ट्वाभिजातां कनकादर्दातामेकान्तकान्तां युवतिं सुतां ताम् ।
नृपो मुदोपेत्य तिरीटवत्सः प्रियं वचः प्राह विनीतवत्सः ॥ ६१ ॥
राजन् ! गृहे मे दुहितोदपादि प्रियैः शुभैरुच्चगुणैरुपेता ।
स्त्रीरत्नमेतन्नृपयोग्यमेवेत्यतो भवानर्हति तां ग्रहीतुम् ॥ ६२ ॥
सम्प्रेष्य विप्राञ्छुभलक्षणज्ञान् परीक्षणीयास्ति विशेषतः सा ।
परीष्टिमिष्टां च विधाय सम्यग् रोचेत यत् तद् भवता विधेयम् ॥ ६३ ।
इत्येतदाकर्ण्य वचोऽदसीयं नृपस्तथास्त्वित्यभिधाय सद्यः ।
विप्रान् विधिज्ञान् प्रजिघाय तस्याः परीक्षणायाहितलक्षणायाः ॥ ६४ ॥
विप्रास्ततः श्रेष्ठिगृहे प्रयाता भुक्ताश्च पीताश्च समादृताश्च ।
यावत् स्थितास्तावदुपागताऽसावलंकृतालंकरणैः कुमारी ॥ ६५ ॥
रूपप्रकर्षेण समुज्ज्वलन्तीं सुवासिनीं चारुविलासिनीं ताम् ।
अलोकसामान्यगुणाभिरामां क्षणं निरीक्ष्यैव समे व्यमुह्यन् ॥ ६६ ॥
नष्टो विवेकः सकलोपि तेषां द्विजन्मनां कामवशं गतानाम् ।
उन्मादयत्येव विवेकिनोपि कष्टो विकारः खलु कामजन्यः ॥ ६७ ॥
कामान्ध्यमाना हतबुद्धयस्ते तदेकचित्ताः प्रतिपत्तिमूढाः ।
परीक्षणं कर्तुमिताः कुमार्याः परीक्ष्यमाणाः स्वयमेव जाताः ॥ ६८ ॥
तदातिमात्रं विकृतिं गतांस्तान् द्विजान् निशाम्याभिदधे कुमार्या ।
समागताः सन्ति कुतः क एते मल्लक्षणं साधु परीक्षमाणाः ॥ ६९ ॥

सवप्यमी कामविकारदुष्टाः परीक्षणं कर्तुमलं न सन्ति ।
दुष्टः स्वयं योस्ति कथं परेषां स दोषमुद्घोषयितुं प्रभुः स्यात् ॥ ७० ॥
तस्मात् समस्ता अपि शीघ्रमेते दत्त्वार्धचन्द्रं बहिरेव कार्याः ।
नहीदृशानां मम कामुकानां परीक्षणे काचन शक्तिरस्ति ॥ ७१ ॥
तदुन्मदन्तीवचनं निशम्य बहिष्कृताः स्वामिगृहाद् द्विजास्ते ।
यतां विकारं त्यजतां विचारं धिक्कार एवास्तु, कुतोऽधिकारः ॥ ७२ ॥
निष्कासिताः श्रेष्ठिगृहात् तदानीं ललज्जिरे बह्वपमानितास्ते ।
कुमारभूपस्य समीपमित्वा क्रोधोपरुद्धा वचनं मृषोचुः ॥ ७३ ॥
देवैक्षि कन्या कटुभाषिणी सा गुणैर्विहीना शुभलक्षणैश्च ।
दुर्लक्षणत्वाद् भवतोनुरूपा नैवास्त्यतो द्राक् परिवर्जनीया ॥ ७४ ॥
राजा तु विप्रोदितमेव सत्यं मत्वा सुतां नादृत विप्रलब्धः ।
हृदा तदंगीकरणाभिलाषं जहौ परप्रत्ययनेयबुद्धिः ॥ ७५ ॥
अलक्षणत्वात् परिभाविता हि राज्ञेति वार्तामवगम्य खिन्ना ।
तिरीटवत्सस्य सुतोन्मदन्ती विचारयामास मनस्यथैवम् ॥ ७६ ॥
नाहं विमूढा न च दुर्दुरूढा दुर्लक्षणा नापि च संभवामि ।
कथं स भूपोऽविदितस्वरूपो मामन्यथाकारमिह ब्रवीति ॥ ७७ ॥
स्वस्थास्मि शुद्धास्मि सुशिक्षितास्मि भक्तास्मि पित्रोर्वशवर्तिनी च ।
तथापि यद्यस्म्यपलक्षणाहं तदा भवेदाहितलक्षणा का ? ॥ ७८ ॥
द्रक्ष्यामि काले नृपतिं कदाचित् कथं स मामाख्यत दुर्निमित्ताम् ।
विचिन्तयन्तीति तदोन्मदन्ती राज्ञामुना वैरमिव न्यबध्नात् ॥ ७९ ॥
तिरीटवत्सस्तु सुतां स्वमत्या राज्ञा तदस्वीकरणादगत्या ।
यूने गुणज्ञाय विचारकाय मुदा तदादादहिपारकाय ॥ ८० ॥
साऽभूत् प्रिया तस्य गुणप्रियस्य सेनापतित्वेऽधिकृतस्य भूयः ।
लब्ध्वा सुशीलां वरवर्णिनीं तामवर्णनीयं सुखमाप सोपि ॥ ८१ ॥

किं कर्म तद् यस्य फलेन तन्वी साऽनिन्द्यसौन्दर्यवती बभूव ।
लोकोत्तरायाः सुषमान्वितायास्तदप्यमुष्याः श्रवणीयमस्ति ॥ ८२ ॥

वाराणसेये हतभागधेये पुरा दरिद्रेऽभिजनेऽजनीयम् ।
महोत्सवे क्वापि सुभूषिताः स्त्रीः कौसुम्भवस्त्राभरणा ददर्श ॥ ८३ ॥

क्रीडारता भूषणभूषिताङ्गीः कुसुम्भरागाञ्चितवाससस्ताः ।
विलोकयन्त्याढ्यकुलीनयोषा रोषाकुलाभून्निजभाग्यदोषात् ॥ ८४ ॥

दरिद्रितत्वात् कथमिभ्यलभ्यान्या भूषणान्याशु समश्नुवीत ।
तथापि साढ्यङ्करणं विशेषात् कौसुम्भवासः परिधानमैच्छत् ॥ ८५ ॥

इच्छामवोचत् पितरौ प्रति स्वां स्फुटं निशम्यावदतां च तौ ताम् ।
वयं दरिद्राः प्रियपुत्रि ! वासो महार्घमीदृक् कथमाप्नुयाम ॥ ८६ ॥

आदिश्यतां तर्हि भृतिं विधातुं कुत्रापि गत्वाढ्यकुलीनगेहे ।
यां जीविकाकृत्य परिश्रमेण महार्घमेतद् वसनं लभेय ॥ ८७ ॥

इत्यूचुषीं तां भृतयेऽवदातां प्रीतावनुज्ञां पितरावदाताम् ।
लब्धाभ्यनुज्ञा च भृतिं चिकीर्षुः कस्यापि सेभ्यस्य कुले जगाम ॥ ८८ ॥

गत्वाब्रवीदित्थमये महेच्छाः ! कार्यार्थिनीं मामवगच्छतैताम् ।
रक्तस्य वस्त्रस्य कृते स्वदेहे भृत्यां चिकीर्षाम्यहमत्र गेहे ॥ ८९ ॥

वित्तैषिणीं मां न च वित्त यूयं कौसुम्भवासो ह्यहमीप्सुरस्मि ।
यद्यस्ति किंचिन्मम योग्यमत्र श्रीमद्गृहे कार्यमुदीर्यतां तत् ॥ ९० ॥

ततोऽभ्यधादिभ्यकुलाधिपस्तां कार्यं तु बह्वस्ति परं शृणु त्वम् ।
वर्षत्रयानन्तरमेव भद्रे ! त्वद्योग्यतां वीक्ष्य भृतिं प्रदाता ॥ ९१ ॥

एतद् यदि स्वीकुरुषे तदेहि कार्यं विधेह्यत्र च दत्तचित्ता ।
तदोररीकृत्य मुदात्मभृत्याकृत्येऽभवत्सापि हृदा प्रवृत्ता ॥ ९२ ॥

कार्यं स्वचित्तानुगुणं गुणज्ञो दृष्ट्वा तदीयं धनिकः प्रसन्नः ।
प्रागेव वर्षत्रितयादयच्छद् रक्तं तदन्यच्च सहैव वासः ॥ ९३ ॥

वाणीमभाणीच्च गृहाण चैलं कुसुम्भवर्णं स्वमनोनुकूलम् ।
स्वाभिः सखीभिः सह वेश्म गत्वा स्नात्वा पवित्वा परिधत्स्व चैनत् ।।६४।।

सोपात्तचैला गृहमेत्य साकं स्नातुं गता स्वीयसखीभिरेकम् ।
तपस्विनं काश्यपबुद्धशिष्यं यदृच्छयोपागतमालुलोके ।। ६५ ।।

विलोक्य तं चीवरवर्जितं सा वृक्षत्वगाच्छादितगात्रयष्टिम् ।
प्रकुर्वती स्नानमहीनकालं व्यचीचरच्चारु तदैवमुच्चैः ।। ६६ ।।

अयं प्रबुद्धो यतिरात्मलीनः पुरःस्थितश्चीवरवस्त्रहीनः ।
दद्यामहं लोहितकं पटञ्चेदस्मै तदा पुण्यवती भवेयम् ।। ६७ ।।

मया पुराऽकारि न दानमस्मात् सुदुर्लभा मे वसनोपलब्धिः ।
पटस्य खण्डद्वयमस्य कृत्वा ददेहमार्याय सुभिक्षवेऽस्मै ।। ६८ ।।

इत्याकलय्येत्य पुरः पटं स्वं सा स्नाननिर्णिक्ततनुर्विपाट्य ।
अर्धं स्वयं पर्यदधादथार्धं प्रणम्य तस्मै यतये मुदादात् ।। ६६ ।।

तद्दत्तवस्त्रं स यतिर्गृहीत्वा गत्वा रहस्तत्र विमुच्य वल्कम् ।
प्रावृत्य वासः परिधाय चाशु ततः समागत्य पुरोवतस्थे ।। १०० ।।

तद्वस्त्ररोचिर्निचयेन भिक्षोर्वपुर्ज्वलत्सूर्य इवोद्दिदीपे ।
यदद्भुतं प्रेक्ष्य विचारशीला चित्रीयमाणा व्यचिचिन्तदेषा ।। १०१ ।।

न रक्तवासः प्रतिमोचनात् प्राग् ईदृक्प्रकाशो यतिरेष आसीत् ।
आमुच्य तल्लोहितकं पटं तु विभाति बालार्क इवोल्लसद्भाः ।। १०२ ।।

देदीप्यतेऽयं प्रतिमुक्तवासा यतो विशेषेण विभूषितोऽतः ।
द्वितीयमप्यर्धमहं पटस्य दद्याममुष्मै यतये कथं न ? ।। १०३ ।।

विचिन्तयन्त्येवमसौ पटस्यावशिष्टमप्यर्धमदाद् विनम्रा ।
पुरःस्थितः साञ्जलिबन्धमित्थं सम्प्रार्थयामास च तं भदन्तम् ।। १०४ ।।

अये महात्मन् भगवन् दयालो ! गृहाण वासोऽनुगृहाण चेमाम् ।
अकिञ्चनां, काञ्चनकान्तकान्तिः कल्याणिनी स्यां त्वदनुग्रहेण ।। १०५ ।।

गृहीतजन्मा भुवनेऽद्वितीया तथोत्तमा रूपवती भवेयम् ।
यथा क्वचिन्मामतिशय्य धन्या न सुन्दरी स्यादिह काचिदन्या ॥१०६॥
आलोकमात्रेण ममोज्ज्वलाङ्ग्या विमोहितः स्यात् सकलोपि लोकः ।
विलुप्तधैर्यो भृशमुन्मदिष्णुर्न चेतयेतैव सचेतनोपि ॥ १०७ ॥
यतिस्तदाकर्ण्य तथास्त्वितीमां शुभाशिषं प्रोच्य ययौ यथेतम् ।
सापि प्रतीता स्वगृहं निवृत्ता काले पुनर्जन्म मृतोपलेभे ॥ १०८ ॥
जन्मान्तरं प्राप्य निकामरम्या सुरेन्द्रलोके किल संचरन्ती ।
इहोदितारिष्टपुरेऽभिनन्द्या तिरीटवत्सस्य सुता बभूव ॥ १०९ ॥
सेयं भदन्ताय समागताय कुसुम्भरागोज्ज्वलवस्त्रदानात् ।
पुण्यात् तदाशीर्विषयाच्च हेतोर्दधावसाधारणरूपशोभाम् ॥ ११० ॥
नाम्नोन्मदन्तीत्यभिधीयमाना वपु.श्रियोन्मादकरीयमस्ति ।
यां वीक्ष्य विप्रैर्विकृतिं गतैस्तैर्महीपतिर्विप्रकृतः कुमारः ॥ १११ ॥
भाग्यादिदानीमहिपारकस्य भार्येयमार्यैकपतिव्रतास्ते ।
गृहस्थधर्म परिपालयन्ती सुखेन पुण्यं समयं नयन्ती । ११२ ॥
काले व्यतीतेऽथ कदाचिदिष्टः स्वयं कुमारक्षितिभृत्प्रदिष्टः ।
प्रचक्रमे कार्तिकपूर्णिमायां महोत्सवोऽरिष्टपुरे विशिष्टः ॥ ११३ ॥
प्रमार्जिता पल्लवपुष्पवाटी परिष्कृता गन्धजलावसिक्ता ।
प्रशस्तवस्तूपहिता समस्ता सुशोभिता भूमिरभून्नगर्याः ॥ ११४ ॥
तदा स्वभार्यामहिपारकोऽसौ संबोध्य शुद्धान्तगतामवोचत् ।
प्रियेऽद्य पुण्याहमहोत्सवेऽस्मिन्नलंकृतेयं नगरी समग्रा ॥ ११५ ।
राजास्मदीयः स कुमारसंज्ञो निरीक्षमाणः सुषमाममुष्याः ।
प्रसिद्धमस्मद्गृहमेव पूर्वं द्रष्टुं समेतेति विभावयामि ॥ ११६ ॥
भाव्यं त्वयान्तःस्थितमेव तस्मिन् काले यतस्त्वां न विलोकयेत् सः ।
दृष्टा क्षणं चेदमुना त्वमार्ये ! महाननर्थो भविता तदानीम् ॥ ११७ ॥

त्वदीयसौन्दर्यमतीव हारि सर्वस्य लोकस्य विकारकारि ।
भूपः स मा पप्तदभिन्नरूपे भूयोभिरूपे तवरूपकूपे ।। ११८ ।।

इत्येतदुक्त्वा स्वपतौ यियासौ प्रियोन्मदन्ती स्थिरधीरगादात् ।
द्रक्ष्यामि तावत्समयानुरूपं यथा न दृश्येत मम स्वरूपम् ।। ११९ ।।

गते तु भर्तर्यहिपारके सा दासी समाहूय समादिदेश ।
नृपे मम द्वारमुपागतेऽहं द्रुतं त्वयागत्य निवेदनीया ।। १२० ।।

अस्तंगते भास्वति, चन्द्रबिम्बे पूर्णे निशोभासमुदिते च पुर्याः ।
समन्ततो दीपकदीपितायाः शोभां शुभां प्रेक्षितुमैन्महीपः ।। १२१ ।।

विभूषणैर्भूषितसर्वगात्रो रथस्थितो मन्त्रिगणान्वितः सः ।
विलोकयन्नुत्सवकान्तिमेतः पूर्व गृहद्वार्यहिपारकस्य ।। १२२ ।।

सेनापतेस्तस्य विशेषरम्यः प्रासाद आसीत् स मनःप्रसादः ।
अभ्रंलिहाट्टालकदर्शनीयो मनःशिलाचारुविशालवप्रः ।। १२३ ।।

तत्रागतं वीक्ष्य कुमारभूपं चेटी गृहद्वार्युपतिष्ठमाना ।
आर्ये ! महाराज उपागतोऽसावित्युन्मदन्तीमसुसूचदित्वा ।। १२४ ।।

श्रुत्वैव सा हर्म्यशिरोगृहे स्वे गवाक्षजालान्तरिता स्थिताऽभूत् ।
आदाय पुष्पाणि नृपस्य मूर्धन्यवाकिरत् किन्नरलीलया च ।। १२५ ।।

राज्ञः सपद्यूर्ध्वमुखस्य तस्या मुखारविन्दे निपपात दृष्टिः ।
अभूच्च दृष्टेः समकालमेव कामस्य चापादपि बाणवृष्टिः ।। १२६ ।।

दृष्ट्वोज्ज्वलां चञ्चललोचनां तां सुवर्णवर्णां रमणीं महीपः ।
प्रपीडितः कामशरप्रहारैर्मङ्क्षु न्यमाङ्क्षीद् गहनान्धकारे ।। १२७ ।।

तया तरुण्या प्रसितोऽतिमात्रं दुर्वासनावासितमानसः सः ।
उन्मादयुक्तो विगलद्विवेकः सद्मापि नावेदहिपारकस्य ।। १२८ ।।

हृद्युन्मदन्तीमवधाय रम्यां गम्यामगम्यामपि न व्यजानात् ।
कामाहतो हन्त विमूढचेता ध्रुवं विसस्मार निजस्वरूपम् ।। १२९ ।।

अहो विधेः कीदृगियं विसृष्टिरिष्टाप्यनिष्टाजनि पुष्पवृष्टिः ।
दृष्ट्वोपरिष्टात् क्षणमेष कृष्टिर्भूपोऽप्यभूद् येन विनष्टदृष्टिः ॥ १३० ॥
रथस्थितोऽसावथ सावहित्थं पप्रच्छ मुग्धो निजसूतमित्थम् ।
एतद् गृहं कस्य चकास्ति रम्यं विलोभ्यसौभाग्यवताधिगम्यम् ॥ १३१ ॥
सौदामिनीवाश्रितचन्द्रशाला लावण्यवत्युत्पलिनीव बाला ।
प्रसन्नपूर्णेन्दुमतीव राका समुज्ज्वलद्दीपशिखेव सा का ॥ १३२ ॥
एषास्ति कस्यापि सुता स्नुषा वा प्रियाऽथवा प्रेमरसप्रवीणा ।
विवाहिता वाप्यविवाहिता वेत्यसंशयं मामभिधेहि सूत ! ॥ १३३ ॥
सूतस्तु तं कामविमुग्धबुद्धिं नृपं विदित्वा विशदं न्यगादीत् ।
अये महाराज ! कथं समक्षं पश्यन्नपि त्वं नहि पश्यसीदम् ॥ १३४ ॥
अस्याः सुदत्याः शुभमन्ववायं मातुः पितुश्चाहमवैमि सम्यक् ।
जानामि तं चापि जनं पुनस्त्वां यः सेवते प्रत्यहमप्रमत्तः ॥ १॥५ ।
स बुद्धिमद्वैभवशालिमुख्यः श्रीमानमात्योस्त्यहिपारकाख्यः ।
तस्यैव भार्येयमुदात्तकान्तिर्नाम्नोन्मदन्तीत्यभिधां भजन्ती ॥ १३६ ॥
श्रुत्वापि भूपस्तु तदोन्मदन्त्यां रागानुबन्धाद् हतबुद्धिरासीत् ।
अतः समुत्सृज्य समस्तमन्यद् वाचं तदा तद्विषयामगादीत् ॥ १३७ ॥
अहो किमुच्येत विमोहनीयं नामोन्मदन्तीत्युचितं हि धत्ते ।
उन्मादितोस्मि प्रसभं नताङ्ग्या ययानयाहं विनयान्वितोपि ॥ १३८ ॥
किमत्र कुर्वेऽप्रतिबद्धशक्तिर्मनःसमाधौ प्रभवामि नाहम् ।
क्षणं निरीक्ष्यैव यतोहमेतां कामातुरो मोहमुपागतोस्मि ॥ १३९ ॥
अथोन्मदन्त्यात्मनि वीक्ष्य बाढं निबद्धरागं नृपतिं प्रगाढम् ।
गवाक्षजालादपसृत्य नीचैरन्तःपुरं स्वं प्रविवेश शीघ्रम् ॥ १४० ॥
तामन्तरा व्याकुलितान्तरोसौ भूपोभ्यनन्दन्न पुरस्य शोभाम् ।
निरीक्षणं चापि महोत्सवस्य तच्चिन्तयैव स्थगितं चकार ॥ १४१ ॥

स्वसारथिं चाह विचारमूढः पुरःस्फुरत्कामरथाधिरूढः ।
निवर्तय स्यन्दनमङ्ग ! शूलो महोत्सवोऽयं न ममानुकूलः ॥ १४२ ॥
यस्योन्मदन्ती तरुणीगणानां शिरोमणिः सा रमणी प्रियास्ते ।
श्लाघ्यस्य तस्यास्त्वहिपारकस्य क्षणे क्षणेऽयं क्षण ईक्षणीयः ॥ १४३ ॥
तस्यैव सौभाग्यवतोनुकूलं प्राज्यं च राज्यं रमणीयमस्तु ।
मादृक् तु तादृग्रमणीविहीनो भ्रमन्नगर्यां कथमादृतः स्यात् ॥ १४४ ॥
इत्यूचिवान् पुष्परथं निवर्त्य नृपः स्वहर्म्यं च तदाभिगत्य ।
एकान्तशय्यामधिशय्य मोहादनर्गलं सोत्कलिको व्यलापीत् ॥ १४५ ॥
सुकोमलाङ्गीं मृगलोचनां तां साक्षात् सुरस्त्रीमिव चन्द्रकान्ताम् ।
दृष्टाममुष्यां निशि पौर्णमास्यां लब्ध्वाहमानन्दमितः कदा स्याम् ॥१४६॥
कपोतपादारुणवस्त्रभासा प्रकाशिताशा विकसद्विलासा ।
चन्द्रोदये साब्जमुखी यदैक्षि मूर्तं तदेन्दुद्वयमेव मेने ॥ १४७ ॥
अनङ्गरङ्गस्थलमन्तरङ्गं तरङ्गयन्ती कुटिलैः कटाक्षैः ।
असौ विशालायतपक्ष्मलाक्षी मनोऽहरन्मे वनकिन्नरीव ॥ १४८ ॥
मणिप्रभोद्भासितकुण्डलश्रीर्हेमद्युतिर्विद्युदिवोल्लसन्ती ।
मुग्धा विदग्धोचितलीलया मां व्यलोकयत् सा चकिता मृगीव ॥ १४९ ॥
सुबाहुरारक्तनखा सुकेशा स्वच्छा सुवृत्ता सुमुखा सुवेशा ।
स्पर्शक्षमा मस्तकमात्तहस्ता संतोषयेन्मां नु कदा प्रशस्ता ॥ १५० ॥
सुहासिनी सुन्दरभाषिणी सा सुभूषणा कोमलबाहुपाशैः ।
कदा परिष्वङ्क्ष्यति मां कृशाङ्गी मुदा रसालं नवमल्लिकेव ॥ १५१ ॥
गण्डच्छविन्यक्कृतपुण्डरीका लाक्षोक्षिता चञ्चलचञ्चरीका ।
लतेव सा कन्दलितोदबिन्दुस्तनी कदोपैष्यति निन्दितेन्दुः ॥ १५२ ॥
कदा प्रियां प्राणसमां नवीनामालिङ्ग्य दोर्भ्यां नवनीतमृद्वीम् ।
अहं तदास्येन समं स्वमास्यं संयोज्य धास्याम्यधरामृतं तत् ॥ १५३ ॥

प्रियः सुरापो ह्यपरं सुरापं प्रीत्या यथा दातुमुपैति पात्रम् ।
तथा कदा मां प्रणयप्रकर्षादुपासितुं सैष्यति सोपहारा ।। १५४ ।।

यदा प्रभृत्येव मया व्यलोकि सा चारुसर्वावयवोन्मदन्ती ।
मनस्तदारभ्य न शान्तिमेति निवर्तते मे हृदयान्न सापि ।। १५५ ।।

निशामिता यत्र मया निशायां समुज्ज्वलत्कुण्डलमण्डलासौ ।
ततः प्रभृत्येव लभे न निद्रामहं सहस्रर्ण इवाक्षशौण्डः ।। १५६ ।।

दद्याद् यदीशो वरमीप्सितं मे तदैतदेवामुमिहार्थयिष्ये ।
एकद्वरात्रानहमुन्मदन्ती निर्वेष्टुमिष्टामहिपारकः स्याम् ।। १५७ ।।

इत्याद्यरूच्यं वहुधोच्चनीच मनोविचारं रचयन् क्षितीशः ।
संभूय भूयो मदनेषुविद्धः पथश्च्युतो भ्रष्टविवेक आसीत् ।। १५८ ।।

राज्ञस्तु तद्वृत्तममात्यवर्गाच्छ्रुत्वा प्रसंगादहिपारकोपि ।
कार्यान्निवृत्तो भवनं स्वमित्वा पप्रच्छ भार्या स्वयमुन्मदन्तीम् ।। १५९ ।।

प्रिये ! त्वया रूपमिदं स्वकीयं कुमारभूपं प्रति दर्शितं किम् ?
यथार्थमाचक्ष्व यतो महीपः स मा स्म भूत्त्वय्यधुना प्रतीपः ।। १६० ।।

तदोन्मदन्त्युक्तवती विनीता स्वामिन् ! पुमानेक इहागतोभूत् ।
यस्तुन्दिलः स्थूलतनुर्गरिष्ठो रथस्थितोऽदृश्यत दन्तुरश्च ।। १६१ ।।

राजा स आसीद् रजकोऽथवेति स्पष्टात्र मे न प्रतिपत्तिरस्ति ।
आयाति राजायमिति स्वकीयादाकर्णितं प्रेष्यमुखान्मयापि ।। १६२ ।।

भूत्वा गवाक्षान्तरिता तदाहं तस्मिन्नवर्षं कुसुमानि हर्षात् ।
स च क्षणादेव ततो निवृत्तस्तस्मात्परं वृत्तमहं न जाने ।। १६३ ।।

दुःखाकरं वृत्तमिदं निशम्य प्रियां स्वभार्यामवदत् तदा सः ।
अयि ! त्वयाकारि महाननर्थः कश्चिन्न यं वारयितुं समर्थः ।। १६४ ।।

मया निरुद्धापि कथं विरुद्धा जाताभिजातापि मुधा वियाता ।
त्वद्रूपसम्पत्तिरियं विपत्तिं मोत्पीपदत् प्रागुदितं मयेति ।। १६५ ।।

इत्येतदुक्त्वा त्वरितः परेद्युः प्रातः स भूभृद्भवनं प्रयाय ।
अन्तःपुरद्वार्यशृणोदथेनं* तदोन्मदन्त्यै विलपन्तमेनम् ॥ १६६ ॥

व्यचीचरच्चापि यदुन्मदन्तीनिमित्तमेष प्रलपत्यजस्रम् ।
सा प्राप्यतां जीवितमिच्छुना द्रागप्राप्य तामद्य मरिष्यतीति ॥ १६७ ॥

मयास्य राज्ञो यशसो निमित्तेऽतिसङ्कटेस्मिन्नसवोऽभिरक्ष्याः ।
अतोऽभ्युपायेन हि येन केन स्वस्वामिनस्त्राणमहं करिष्ये ॥ १६८ ॥

निवृत्य भूभृद्भवनात् स्वगेहं गत्वा स विश्वास्यमुवाच भृत्यम् ।
कार्यं त्वयैकं मम कार्यमार्य ! प्रसन्नचित्तेन धिया विचार्य ॥ १६९ ॥

त्वया मदुक्तं विधिवद् विधेयं तदोज्ज्वलं स्यात् तव नामधेयम् ।
स्वस्वामिनो ये प्रियमाचरन्ति धन्यास्त एवानुचरा भवन्ति ॥ १७० ॥

इतस्तु यस्तिष्ठति वृक्ष एष जीर्णो महान् दीर्घतमः समक्षम् ।
कस्यापि न स्याद् विदितं यथैवं तत्कोटरं त्वं निविशस्व सायम् ॥१७१॥

अहं तदानीं बलिकर्म कुर्वन् तद्देवतां तत्र नमस्करिष्यन् ।
समागमिष्यामि विनीतवेष. सम्प्रार्थयिष्ये च यथावदेवम् ॥ १७२ ॥

भो वृक्षदेव ! त्वमुपासनीयो मनोरथं नः सफलीकुरुष्व ।
नृपोऽस्मदीयो विलपन् मुमूर्षुर्भवत्यतस्तं लघु जीवयेति ॥ १७३ ॥

चिन्तातुरो दृष्टपुरोत्सवोऽयं दुःखान्निजान्तःपुरसंस्थितोऽस्ति ।
किं कारणं तत्र वयं न विद्मस्त्वं सर्वविद् ब्रूहि तदप्यदृष्टम् ॥ १७४ ॥

राजा प्रजारञ्जनकृन्न एष प्रियङ्करः खल्वपि देवतानाम् ।
मुद्रासहस्रं व्यययत्युदारः सदानुतिष्ठन् बलिवैश्वदेवम् ॥ १७५ ॥

ततस्त्वया कोटरसंस्थितेन स्वरं स्वकीयं परिवर्त्य वाच्यम् ।
सेनापते ! त्वन्नृपतेर्न कश्चिद् रोगः शरीरेऽस्त्युदितः कुतश्चित् ॥१७६॥

---

* अथ 'इनं' स्वामिनमिति च्छेदः ।

मनस्तु ताम्यत्यनिशं तदीयं व्यासक्तमत्यन्तमिहोन्मदन्त्याम् ।
तां प्राप्य जीविष्यति नान्यथायं तस्मात् प्रियामाशु तमर्पयेति ॥१७७॥
अनन्तरं यत् करणीयमस्ति स्वयं मयैवेत्य विधायिता तत् ।
युक्त्यानयाऽऽसक्तिमुदस्य नार्यामार्यः स कार्ये निरतो नृपः स्यात् ॥१७८॥
एवं समादिश्य विशिष्टभृत्यं सम्प्रैषिषद् द्रागहिपारकस्तम् ।
स चापि गत्वा तरुकोटरस्थो भूत्वा तमेवागमयाम्बभूव ॥ १७९ ॥
अन्येद्युरागत्य स एव वृक्षो यथोक्तमेवार्थ्यहिपारकेण ।
तदन्तरस्थश्च स एव भृत्यः प्रत्युक्तवान् बोधितपूर्वमेव ॥ १८० ॥
सेनापतिस्तद्गदितं निशम्य प्रणम्य भक्त्या द्रुमदेवताञ्च ।
निवृत्य सद्यः सचिवान् सभाज्य प्राज्ञः स राज्ञः सदनं विवेश ॥ १८१ ॥
नृपस्तु शुद्धान्तगतोपि रागादासीदशुद्धान्तर एव हन्त ।
वृद्धिं गते रागमलानुषङ्गे बुद्धेर्विशुद्धेर्हि कुतः प्रसंगः ॥ १८२ ॥
आवेदितो भृत्यजनैस्तदानीं ज्ञात्वा स्थितं द्वार्यहिपारकं सः ।
स्वपार्श्वमाकारयदेनमारान् मारानुविद्धः क्षितिपः कुमारः ॥ १८३ ॥
उपेत्य सोपि प्रणनाम भूपं सप्रश्रयं वाचमुवाच चेमाम् ।
राजन् ! भवद्भावुककामुकोऽहं कार्याज्झटित्येव समागतोस्मि ॥ १८४ ॥
प्रयच्छता भूतबलिं प्रगेऽद्य ज्ञातं मयेद निजवृक्षयक्षात् ।
अस्त्युन्मदन्त्यां बत मे प्रियायां भवन्मनो रक्तमतिप्रसक्तम् ॥ १८५ ॥
यद्येवमंगीकुरुतां भवांस्तां स्वयं प्रयच्छाम्यहमात्मकान्ताम् ।
तान्तां मनोवृत्तिमपास्य शान्तां तनोतु चिन्तारहितां च कान्ताम् ॥१८६॥
सेनापतेर्वाक्यमिदं निशम्यान्वयुक्त भूपश्चकितस्तमेवम् ।
ममोन्मदन्तीविषयोऽनुरागो ज्ञातोस्ति किं यक्षगणैरपीति ॥ १८७ ॥
प्रोवाच सेनापतिरार्य ! सत्यं व्यज्ञायि यक्षैरपि वृत्तमेतत् ।
यदुन्मदन्तीं प्रति बद्धरागो भवन् भवानत्यवसीदतीति ॥ १८८ ॥

भूपस्तु यक्षाधिगतं स्ववृत्तं विज्ञाय विज्ञोऽतितरां ललज्जे ।
प्रबुद्धतत्त्वश्च तदोन्मदन्तीरागाद्‌दनिष्टान्निविवृत्सुरूचे ॥ १८६ ॥

भो मित्र ! दोषोऽयमभूत् प्रकाशः कामात्मनो मेऽत्र भवेद्विनाशः ।
न चामरोऽहं भवितास्म्यपुण्यः कामप्रवृत्तो विबुधेषु गुण्यः ॥ १६० ॥

मह्यं स्वकीयां ददतश्च भार्यां दूयेत चित्तं तव तद्वियोगात् ।
कथं सुखी स्यां विरहीकरिष्यन्नभिन्नमित्रत्वमुपागतं त्वाम् ॥ १६१ ॥

( द्रुतविलम्बितं वृत्तम् )

नृपतिरस्मि सदा जनतासुखा-
न्यभिलषामि रमेऽपि च तत्सुखे ।
कथमधर्ममिमं तनुयां सखे !
नहि तथा पतितो भवितास्म्यहम् ॥ १६२ ॥

# सप्तमः सर्गः

ततस्तु सेनापतिभूमिपत्योरित्थं मिथो भाषणमाविरासीत् ।
एकस्तयोः स्वां दयितां प्रदित्सुर्धन्योऽभवत् तामजिघृक्षुरन्यः ॥ १ ॥

सेनापतिः—

राजन्नुपादत्स्व ममोन्मदन्ती रमस्व सार्धञ्च तया प्रकामम् ।
यथेष्टमिष्टां कुरु कामतृप्तिं तद्वासनावासितमानसस्त्वम् ॥ २ ॥

विहाय मां त्वां च न कश्चिदन्यो वार्तामिमां ज्ञास्यति भूतलेऽस्मिन् ।
प्रिया मया तुभ्यमदायि भार्या त्वयाप्युपादायि च सा मुदेति ॥ ३ ॥

राजा—

सेनापते ! भक्तिरनुत्तमा ते दित्सुः स्वभार्यामसि मह्यमार्याम् ।
परन्तु किञ्चिद् वचनीयमत्र पश्याम्यहं तत्कथयामि मित्र ! ॥ ४ ॥

पापं प्रकुर्वन् मनुते मनुष्यो मद्दुष्कृतं वेद न कश्चिदन्यः ।
किन्तु स्थिता देवगणास्तदीयं जानन्ति सर्वं ह्यशुभं शुभं वा ॥ ५ ॥

को नाम विश्वासमुपैष्यतीह प्रीतिस्त्वदीया न तया सहेति ।
प्रयच्छतो मह्यममू नताङ्गीं ध्रुवं विघातः प्रणयस्य ते स्यात् ॥ ६ ॥

सेनापतिः—

राजन्नसौ सातिशयं प्रिया मे प्रीतिस्तदीयापि मया सहास्ते ।
तथापि यच्छामि निजेच्छयाहं स्वामुन्मदन्तीं भवतः सुखाय ॥ ७ ॥

अतस्त्वमुन्माद्यवयोभिरूपां भजोन्मदन्तीं प्रमदां मदुक्तः ।
कार्यादतो मा प्रमदः सखे ! त्वं व्याघ्रीमिव व्याघ्र उपेहि शीघ्रम् ॥ ८ ॥

राजा—

सेनापते ! प्रातिकरं वचस्ते तथापि भूतार्थमहं ब्रवीमि ।
विपन्निमग्ना अपि धर्मवीरास्त्यजन्ति कर्तव्यपथं न धीराः ।। ६ ।।
प्रलोभिता भूरि सुखैषणाभिः कष्टैरनिष्टैः परिवेष्टिता वा ।
कल्याणहेतु सुविनिश्चितार्थं धीराः स्वमार्गं न परित्यजन्ति ।। १० ।।

सेनापतिः—

राजंस्त्वमेवासि पिता मदीयः प्रियः सखा स्वाम्यभिनन्दनीयः ।
दासोऽस्मि ते पुत्रकलत्रयुक्तस्त्वत्प्रीतयेहं स्वविधौ नियुक्तः ।। ११ ।।
प्रियामुपादाय ममोन्मदन्तीं मनोनुकूलानुपभुङ्क्ष्व भोगान् ।
निवृत्तकामश्च भवन् निकामं मामेव सप्रेम समर्पयामूम् ।। १२ ।।

राजा—

सेनापते ! तत्त्वमिदं शृणु त्वं जानीहि कर्त्तव्यगतं महत्त्वम् ।
यद्धि त्वया मत्प्रणयादवाचि शक्तिर्न मे तत्कथनेऽस्ति वाचि ।। १३ ।।
अहं महानित्यभिमन्य योऽन्यानुपेक्ष्य पापाचरणं करोति ।
भवत्यभाग्योपहतः स नित्यं नाप्नोति पूर्णं पुरुषायुषञ्च ।। १४ ।।
आत्मोपमं दुःखसुखं परेषामपीक्षते यः स महान् मनुष्यः ।
स एव राजा स्पृहणीयकीर्तिर्धर्मस्य तत्त्वं च स एव वेद ।। १५ ।।

सेनापतिः—

राजन् ! प्रियां तामहमुन्मदन्तीं प्रियाशयैव प्रददामि तुभ्यम् ।
प्रियप्रदानाद्धि मनोनुकूलं लभ्येत वस्तु प्रियमत्र लोके ।। १६ ।।

राजा—

सेनापते ! कामविकारजुष्टः स्पष्टं विनष्टोऽस्म्यपथप्रविष्टः ।
कामात्मता नैव मता प्रशस्तेत्यतोऽस्य कामस्य वधं करिष्ये ।। १७ ।।

सेनापतिः—

राजन् ! न गृह्णास्यहिपारकस्य भार्येयमार्येति विचार्य चेत् त्वम् ।
त्यजामि देवस्य कृते तदेमां त्यक्तांश्च तां स्वीकुरु संप्रहृष्टः ॥ १८ ॥

राजा—

सेनापते ! त्वं भवितास्यनार्यो निरागसं त्यक्ष्यसि चेत् स्वभार्याम् ।
स्वपूर्तिकाम्योपि भवन् प्रणाय्यो निन्दिष्यसे सर्वजनेन तात ॥ १९ ॥

सेनापतिः—

राजन्नुपालम्भमथाप्यवज्ञां निन्दाञ्च नैजां मुदितः सहिष्ये ।
यद् दुष्कृतं, मय्यधि वर्ततां तत् त्वमीप्सिते कामसुखे रमस्व ॥ २० ॥

राजा—

सेनापते ! वृष्टिजलं यथोच्चस्थलात् स्खलद् दूरतर प्रयाति ।
तथैव लक्ष्मीरपयाति सत्यं नरादवज्ञाततराविहारात् ॥ २१ ॥

सेनापतिः—

राजन् ! यथेयं सहते सदोर्वी जडं तथा चेतनमत्र गुर्वी ।
तथाखिलं क्लेशमहं सहिष्ये हितं त्वदीयं च सदा करिष्ये ॥ २२ ॥

राजा—

सेनापते ! नाभिलषाम्यकार्यात् कष्टानि कस्मैचिदपि प्रदातुम् ।
धर्मे स्थितोऽहं स्वयमेव कष्टं सहेय, नान्यं व्यथयेयमार्य ! ॥ २३ ॥

सेनापतिः—

राजन् ! विधौ स्वर्गसुखप्रदे मे विघ्नो भवान् मा स्म भवत् स्वनिघ्ने ।
प्रदीयते ते दयितोन्मदन्ती मयाध्वरे ब्राह्मणदक्षिणेव ॥ २४ ॥

राजा—

त्वं मे हितैषी सुहृदस्यभिन्नः प्रियां प्रयच्छन्नपि नासि खिन्नः ।
त्यागात् स्त्रिया देवपितृष्ववज्ञा स्थिरात्र चामुत्र च मित्र ! ते स्यात् ॥ २५ ॥

सेनापतिः—

निजेच्छया तुभ्यमहं ददामि प्रियां स्वकीयामिति नास्त्यवज्ञा ।
पौरेषु वा जानपदेषु कश्चिन्नाधर्ममेनश्च वदेद् विपश्चित् ॥ २६ ॥

प्रादायि तुभ्यं शुभलक्षणेयं मयोन्मदन्तीत्यवधारणीयम् ।
मल्लीमतल्लीमिव कामवल्लीमाश्लिष्य* फुल्लाधरपल्लवां त्वम् ॥२७॥

यथेच्छमच्छामुपभुज्य तन्वीं संतृप्य चेच्छोपरमे विजह्याः ।
अहं प्रसीदामितमां स्वभार्यां तुभ्य प्रयच्छन् कृतकार्य आर्याम् ॥ २८ ॥

राजा—

अमारकात् कामविकारगर्तादुत्तारको मेऽस्यहिपारकस्त्वम् ।
सखा हितैषी परमो मनीषी कथं तव स्यामहमन्यथैषी ॥ २९ ॥

कित्वब्धिवेलेव विलोकनीया धर्माः सतां सन्त्यविलङ्घनीयाः ।
श्रेयोर्थिभिर्ये परिपालनीया मया सदा मित्र ! निभालनीयाः ॥ ३० ॥

सेनापतिः—

राजन् ! मदीयः शुभचिन्तकस्त्वं दाता विधाताऽसि पुनस्त्वमेव ।
मदङ्गनालिङ्गनजं प्रमोदं भूयो लभस्वेति निवेदयेऽहम् ॥ ३१ ॥

राजा—

धन्योऽसि मन्त्रिन्नहिपारक ! त्वमिष्टं हि मे तेऽस्त्युपकारकत्वम्
त्वया सदैवाचरितोस्ति धर्मस्त्वं वेत्थ सर्वं शुभकर्ममर्म ॥ ३२ ॥

सेनापतिः—

श्रेष्ठोऽसि राजन् शुभकर्मनिष्ठस्त्वं मारजित् प्रेष्ठतमोस्यभीष्टः ।
जीव्याश्चिरं पालय धर्ममेव प्रशाधि माश्चापि त मेव देव ! ॥ ३३ ॥

राजा

सेनापते ! त्वं विगताभिमानः शृणूपदेशं मम सावधानः ।
अहं शुभं सद्भिरनुष्ठितं ते कर्म प्रवक्ष्ये सुखदं यदन्ते ॥ ३४ ॥

---

*श्लिषेर्लोण्मध्यमपुरुषैकवचनम्, न तु ल्यबन्तम् ।

प्रशस्यते धर्मरुचिर्महीपः प्रज्ञान्वितः पुण्यपथप्रदीपः ।
विश्वासघाताज्जनितानुतापात् पापाज्जुगुप्सुश्च जनः प्रशस्यः ।। ३५ ।।

हर्म्येऽतिरम्ये सुविधोपगम्ये यथा स्वकीये सुखमारमन्ति ।
राज्ञः सदाचारपरस्य राज्ये तथा मनुष्याः सुखमारमन्ति ।। ३६ ।।

विना विचारं मतिमान् मनुष्यः कदापि कार्य सहसा न कुर्यात् ।
विनिन्द्यमुक्तं विपदां पदं तद् दुःख्यत्यवश्यं ह्यविमृश्यकारी ।। ३७ ।।

जले तरन्तीषु समासु गोषु पथा वृषश्चेद् विषमेण याति ।
अमूस्तमेवानुसरन्त्यनुक्ता वर्त्म श्रितास्तद्विषमं समस्ताः ।। ३८ ।।

तास्वेव चेद् गोषु वृषः पथासौ जले तरन्तीषु समेन याति ।
अमूस्तमेवानुसरन्त्यनुक्ताः समाश्रिता वर्त्म समं समस्ताः ।। ३९ ।।

इत्थं मनुष्येषु मतो विशिष्टः करोत्यधर्माचरणं यदीष्टः ।
अन्ये तमेवानुसरन्ति नूनं राष्ट्रं प्रदुष्येच्च भवेच्च पूनम् ।। ४० ।।

तेष्वेव लोकेषु महानधीष्टः करोति धर्माचरणं यदीष्टः ।
अन्ये तमेवानुसरन्ति नूनं राष्ट्रं समृद्धञ्च भवत्यनूनम् ।। ४१ ।।

साधारणानां तु कथैव कास्ति येषां प्रभावो न तथा चकास्ति ।
नृपे ह्यधर्मात्मनि सत्यशेषं राष्ट्रं भवेद् गर्हितनामशेषम् ।। ४२ ।।

अधर्मतो नास्म्यमृतत्वमीप्सुर्नैवापि भूमिञ्च विजित्य लिप्सुः ।
गवाश्ववासोमणिकाञ्चनस्त्रीभृत्यादिकञ्चापि न कामयेऽहम् ।। ४३ ।।

नह्युक्तवस्त्वर्थमहं कदाचिच्छक्नोम्यधर्माचरणं विधातुम् ।
प्राज्यस्य राज्यस्य यशोन्वितस्य शिबीत्यभिख्यस्य नरर्षभत्वात् ।। ४४ ।।

पितास्मि नेतास्मि च शिक्षकोऽहं भजे स्वधर्म हि परम्परीणम् ।
भृशं विविच्योच्चकुलं स्वकीयं न जातु कामस्य वशं गतः स्याम् ।। ४५ ।

इत्यादि युक्तं वसुधाधिपस्य वचो निशम्य प्रमनाः स आख्यत् ।
धन्योसि राजन्नपकल्मषस्त्वमाचारवानुच्चविचारवांश्च ।। ४६ ।।

चिरं महाराज ! सुखेन जीव्या त्रिवेद्यविघ्नामवनीं स्वनिघ्नाम् ।
ययाऽजयः कामरिपु विगेयं प्रज्ञा त्वदीयाभ्युदियात् सदेयम् ॥ ४७ ॥

त्वं धर्मविद् धर्मपरायणः सन् धर्मे प्रमाद न कदापि कुर्याः ।
धर्मात् प्रमाद्यन् नृपतिः स्वनाशं नश्यत्यपभ्रंशयते च राष्ट्रम् ॥ ४८ ॥

धर्मं चर त्वं नृपते ! स्वदेशे तथा विदेशेपि चर स्वधर्मम् ।
सुतेषु दारेषु पितृष्वथापि ज्ञातिष्वभीक्ष्णं चर धर्ममेव ॥ ४९ ॥

मित्रेष्वमित्रेषु चर स्वधर्मं ग्रामेषु राष्ट्रेषु पुरेषु चैव ।
प्राणिष्वशेषेषु चराचरेषु धर्मं महाराज ! सदा चर त्वम् ॥ ५० ॥

न जातु कामान्न भयान्न लोभाद् धर्मं त्यज त्वं शिबिभूमिपाल !
प्रशाधि धर्मेण महीं स्वचेतः समाधिमाधाय चिरं चकाधि ॥ ५१ ॥

(वसन्ततिलकावृत्तम्)

धर्मे मतिर्भवतु ते सततोत्थितस्य
रागादिदोषपरिवर्जितमानसस्य ।
आनन्दधाम परमं चरमं झटित्यों
तत्सत्पदं प्रतिपदं त्वमुपाश्रयस्व ॥ ५२ ॥

धर्मात्मनस्तव पुनः प्रकृतिप्रियस्य
लक्ष्मीर्यशः सुखमलं सकलं समृध्यात् ।
उद्यन्तमिन्दुमकलङ्कमिवापरं त्वां
दृष्ट्वा नृचित्तकुमुदानि समुल्लसन्तु ॥ ५३ ॥

इत्यात्मनीनमुपदिश्य निवृत्तवाक्ये
सेनापतौ शुचिमतावहिपारकाख्ये ।
धर्म्यां निशम्य गिरमुच्चविचाररम्यां
राजाऽभवत् प्रमुदितः स्थिरचित्तवृत्तिः ॥ ५४ ॥

( द्रुतविलम्बितवृत्तम् )

समुदितो मुदितो नृपतिर्गुणैः
सुरहितो रहितो निखिलैर्मलैः ।
अविकलं विकलङ्कमिहोज्ज्वलं
रसमयं समयं गमयन्नभात् ।। ५५ ।।

(रुचिरावृत्तम्)

अथ याप्यपथोद्धृतपार्थिवया
कथया श्रुतयाऽऽप्तमनोरथया ।
अनया विनयाश्रयणे श्रमणे
रुचिरा रुचिरारचिता नचिरात् ।। ५६ ।।
स पुनः स्वमनःक्षतशोधनतः
श्रमणोचितपुण्ययशोधनतः ।
उपबुद्धमुवास विशुद्धमतिः
समयेऽभ्युदयं च तथाऽऽप यतिः ।। ५७ ।।

# अष्टमः सर्गः

(शिखरिणीवृत्तम्)

अभून्मल्लीनाम्नो नगरमहिता कोशलपते-
मंहिष्यग्र्या प्रेयस्यतिचटुलत्वादूक्तिनिपुणा ।
सदा हृष्टा पुष्टा निरतिशयतुष्टा च वसुभि-
श्चकासामासासावभिनवविलासा नृपवधूः ॥ १ ॥

कदाचित् संजाते शयनविषयेऽन्योन्यकलहे
नृपस्तस्यै कुप्यन् न खलु सदकार्षीत् प्रियगिरा ।
अतो मानिन्येषा सरुषमवलोक्यातिपरुषं
पतिं नोचे किञ्चित् सुखमधिशयाना स्वभवनम् ॥ २ ॥

तदानीं भिक्षार्थी नृपसदनमैद् भिक्षुसहितो
महात्मा बुद्धोऽसाविह जगति शास्तेति विदितः ।
तदा ज्ञात्वा तूर्णं प्रणयकलहं सोऽपि नृपते-
रपीप्यद् भूपालं मधुरमुपदेशामृतमिदम् ॥ ३ ॥

इयं देवी मल्ली प्रणयरसवल्ली प्रियतमा
त्वयैष्टव्या राजन् ! लसदिभमतल्लीव सुभगा ।
सदा मान्या धन्या निजभवनशोभेव ललिता
कदाचिन्नोपेक्ष्या भवति कमनीया हि रमणी ॥ ४ ॥

भवान्नेदं साधु व्यधित यदिमामग्रमहिषीं
मुधोपेक्षांचक्रे शयनमधिकृत्यैव कलयन्[1] ।
किमार्यैः किन्नर्याः स्मरति, विरहात् तप्तमनसा
चिरं भ्रान्तो भूत्वा कतिपयसमाः किन्नरवपुः ॥ ५ ॥

---

१. कलिं गृह्णानु इत्यर्थः ।

कथं हीदं वृत्तं ? विरहजनिता किन्नरयुग-
प्रवृत्तिर्वा कीदृग् ? विशदमिति वाच्यं भगवता ।
इतीमां जिज्ञासां प्रकटयति भूपे सकुतुकं
कथां बुद्धः श्रीमान् श्रवणमधुरां व्याहरदिमाम् ॥ ६ ॥

पुरा वाराणस्यां नरपतिरभून्नीतिनिपुणो
भुवं शासद् भल्लाटिय इति समाख्यामुपगतः ।
कदाचित् तेनैषि, ज्वलदनलपक्व सुललितं
मयाऽऽस्वाद्य सद्योनिहतहरिणस्यामिषमिति ॥ ७ ॥

विचिन्त्यैवं भूभृत् सकलमपि राज्यस्य विततं
स्वयं त्यक्त्वा भारं शुचिषु निजमन्त्रिष्वधिदधौ ।
स्वतन्त्रः सन् पञ्चायुधपरिगतः प्राप्तविनयैः
श्वभिः सार्धं स्वीयैः सपदि मृगयार्थं प्रचलितः ॥ ८ ॥

प्रयान् सम्प्राप्तोसौ तदनु हिमवन्तं शिखरिणां
समीपे गंगायास्तटमनुसृतस्तत्र गहने ।
निभाल्यैकामन्यां सरितमधिगङ्गं निपतितां
ततस्तामन्वाच्छेद् विपुलमृगमांसाहितमतिः ॥ ९ ॥

भ्रमन् नद्यास्तीरे बहलजटिलायां वनभुवि
बहून् दृष्ट्वा सोऽहन् विपिनशरणान् मुग्धहरिणान् ।
प्रदीप्तेष्वंगारेष्वकृत विधिना मांसपचनम्
प्रकामं प्रत्यग्रं मृगपललमास्वादयत च ॥ १० ॥

सुतृप्तो मांसस्य भ्रमितुमुपकण्ठे स सरितो
ययौ किञ्चिद् दूरं मधुरतरदृश्यान्यनुभवन् ।
वनाली साऽपूर्वा मदयतु कुतो नाम न मनः
प्रकृत्या स्वच्छाया व्यरचि रुचिरा या भगवता ॥ ११ ॥

पवित्राम्भःपूर्णा सफलदलपुष्पैः परिवृता
द्रुमैः स्निग्धच्छायैर्न्न ततिततिभिश्चाप्युपचिता ।
विहंगैरुत्सङ्गे विविधमधुरध्वानमुखरै-
स्तरङ्गैरुत्तुङ्गैररमयदमु सा सरिदपि ॥ १२ ॥

सदा पेयं यस्याः कमठमकराद्यैर्विलुलितं
समन्तात् पूर्णाया अपि जलमुरोदघ्नमभवत् ।
तटे स्वच्छे रेजुः श्रितरजतभासश्च सिकताः
तथा शुभ्रा कारण्डवततिरभूत् क्रीडनपरा ॥ १३ ॥

दधाना हेमाभं परमरमणीयं गुणगणं
सरित् सा हेमन्वत्युचितमभिधानं श्रितवती ।
स्थितस्तस्याः पार्श्वे गिरिरतिगुरुर्गन्धमदनो
लतागुल्मै रम्यः सुरभितदिगन्तश्च शुशुभे ॥ १४ ॥

महीपालो भल्लाटिय इयदवालोक्य रुचिरं
समस्तं तद् दृश्यं पुलकिततनुर्द्राक् समजनि ।
अथैतस्मिन् काले प्रणयरसकेलिं प्रकटयत्
पुरस्तात् तस्याभून्नयनविषयः किन्नरयुगम् ॥ १५ ॥

परिष्वज्यान्योन्यं वदनकमलं चुम्बदरते-
र्वियोगाच्चातीताद् विलपदुभयं चापि युगपत् ।
नदीकूले क्रीडत् किमिदमिति तद् विस्मितमनाः
समारोहच्छैलं युगलमचलः प्रैक्षत नृपः ॥ १६ ॥

तदाश्चर्यं दृष्ट्वा नृपतिरचिचिन्तद् द्वयमिदं
कुतो हेतोर्दुःखात् विलपति तथा रोदिति भृशम् ।
मयैतद् विज्ञेयं निखिलमपि वृत्तं द्रुतमत-
स्तदभ्याशे गन्तुं तरलहृदयोऽसौ व्यवससौ ॥ १७ ॥

शुनः कृत्वा स्थाने विधिवदनुशिष्टान् नियमितान्
तरौ धृत्वा पश्चाप्यथ च निजशस्त्राणि निकटे ।
शनैरित्वा पादध्वनिरहितमुत्फुल्लनयनः
स्थितः सन्नप्राक्षीदुपगिरि युग किंपुरुषयोः ॥ १८ ॥

युवां कस्मादेवं धृतमनुजरूपाविह चिरं
मिथः प्रेमालापं सकरुणविलापं च कुरुथः ।
अभिख्या वां कास्तीत्यखिलमभिधानीयमधुना
युवाभ्यां स्वं वृत्तं प्रणयसंरसाभ्यामनुपदम् ॥ १९ ॥

निगद्यैतद् वाक्यं विरतवचने सत्यवनिपे
पुरोवर्ति द्वन्द्वे न खलु पुरुषः किंचिदवदत् ।
अथ स्त्रीस्वाभाव्यादतिमधुरया वाग्रचनया
स्वकीयं वृत्तान्तं न्यगददखिलं किन्नरवधूः ॥ २० ॥

वपुःसादृश्यान्नौ विदुरिह मृगा ग्राम्यपुरुषौ
गणस्तु व्याधानां व्यपदिशति किंपूरुषयुगम् ।
प्रतीतस्त्वं साक्षान्मृगयुरवनीपाल इति भो
स्त्वया ज्ञेयावावां क्षितिधरचरौ किन्नरवरौ ॥ २१ ॥

त्रिकूटाद्या नद्यो विमलसलिलाः शोशुभति याः
मुदावामेतासां तटमनु विहारं वितनुवः ।
बहोः कालादस्मिन् प्रकृतिकमनीयेऽद्रिगहने
वसावः संयुक्तौ सुखमनुभवावः प्रणयिनौ ॥ २२ ॥

प्रियो मे भर्त्ताभूद् ह्यहमपि तथा तत्प्रियतमा
मिथः श्लिष्टौ हृष्टौ चिरमगमयाव स्वदिवसान् ।
परं को जानीते विधिविलसितं हन्त ! विषमं
विडम्ब्यन्ते जीवा विषयमृगतृष्णान्वितधियः ॥ २३ ॥

दृढप्रेमाबद्धौ बहुलरसयुक्ताववियुतौ
स्रवन्तीरेत्यामूर्विहरणमकुर्वं प्रतिदिनम् ।
अतिक्रान्ते काले हतविधिविपाकादुपनताद्
अभूवानिच्छन्तावपि रजनिमेकां विरहिणौ ॥ २४ ॥

वियोगोऽसह्योऽसौ स्मृतिपथमुपेतः कथमपि
गरीयः सन्तापं जनयति च सम्मोहयति च ।
त्रियामा सा माऽऽगात् पुनरिति सचिन्तौ सकरुणं
विलापैरालापै रहसि गमयावः स्वसमयम् ॥ २५ ॥

न नौ नष्टं द्रव्यं न खलु पितरावप्युपरता-
वमुष्यां यामिन्यामुभयविरहः केवलमभूत् ।
अतो हेतोरावां करुणरुदितैः स्वैरमुदितै-
र्नयावः स्वं कालं नियतिकृतरेखानियमितौ ॥ २६ ॥

पुरस्ताद् दृश्या ते तरुपरिवृतेयं गिरिणदी
स्थिता मध्येशैलद्वयमविरलाम्भोरयवती ।
तटिन्यामेतस्यामनुभवितुमानन्दमधिकं
कदाचिन् मद्भर्ता किल दयितयायात् सह मया ॥ २७ ॥

प्रिया मामन्वेति ध्रुवमनुसरन्ती मम पदं
कृतं सन्देहेनेत्यवहितमना मे पतिरितः ।
जलाप्लावेऽकस्मात् सति बृहति नद्या घनऋतौ
परं पारं सोऽगाद् विवशइव चामुञ्चदिह माम् ॥ २८ ॥

समायान्ती पश्चादहमपि सुगन्धीनि कुसुमा-
न्यचैषं शेफालीर्विकसदतिमुक्तेन्द्रसुरसाः ।
यतः स्रग्वीभूतो भवतु दयितो मेऽति मुदितो
भवेयं तत्प्रेयस्यहमपि च तं प्रेक्ष्य कृतिनी ॥ २९ ॥

इतीव ध्यायन्ती कुरबकयुतान् पाटलकुटान्
सबन्धूकान् सालानचिनवमथोद्दावकतरून् ।
यतः स्रग्वीभूतो भवतु दयितो मेऽतिमुदितो
भवेयं तत्प्रेयस्यहमपि च तं प्रेक्ष्य कृतिनी ।। ३० ।।

प्रसूनं केतक्या अपि विकचगन्धीति रभसात्
प्रियार्थं संचिन्वत्युपधुनि विलम्बं कृतवती ।
यतः स्रग्वीभूतो भवतु दयितो मेऽति मुदितो
भवेयं तत्प्रेयस्यहमपि च तं प्रेक्ष्य कृतिनी ।। ३१ ।।

तदानीं पुष्पाणां निभृतमवचाये प्रसितया
प्रमादं कुर्वत्या प्रमदयुतयापि प्रमदया ।
मया सोऽविज्ञातः सरितमनुयातः प्रियतमो
महद् दूरं प्रायादहह गहनः कालमहिमा ।। ३२ ।।

समुच्चित्यैकत्र न्यधिषत मयाऽशेषकुसुमा-
न्यतिप्रीत्या चित्राण्युपलशकले पादपतले ।
भविष्यत्येषां नौ मृदुपरिमलोद्गारि शयनं
विहर्तास्वश्चावां यदधिशयितौ साध्विति धिया ।। ३३ ।।

पुनः श्वेतं रक्तं मलयजमपि प्रीतिजननं
स्वकीयप्रेयोऽर्थं सुमृदितशिलायामपिनषम् ।
विलिप्ताङ्गः स्वामी भवतु मम येनातिमुदित-
स्तदीयाङ्गश्लेषादहमपि भवेयं च कृतिनी ।। ३४ ।।

विचार्यैवं यावत् समयमनयं कञ्चन पुन-
र्जलाप्लावस्तावद् द्रुतगतिरुपागान्मम पुरः ।
चितानां प्रेम्णाहो ! रुचिररुचिराणां च नचिरात्
प्रसूनानां राशिं बत ! सकलमप्लावयदसौ ।। ३५ ।।

पयःपूरादारादुपचितरयाऽपूरि तटिनी
तदैतुं तत्पारं न परमपपारं ह्यहमहो !
प्रियो मे पारं तत्परमहमवारं च विवशौ
श्रितौ स्वं पश्यन्तौ सविरहमवास्थिष्वहि निशि ।। ३६ ।।

नितान्तं तान्तौ तां रजनिमखिलां सान्धतमसां
सकृच्चावां हासं व्यतनुव सकृच्चापि रुदितम् ।
वियुक्तानामेषा भवति विवशानामिह दशा
मनस्ताम्यद् भ्राम्यद् क्वचिदपि रतिं नैव लभते ।। ३७ ।।

क्रमेणातन्वानौ रुदितमथ हासञ्च, विषमां
क्षपां तां नाभूव क्षपयितुमल कष्टबहुलाम् ।
क्षणो न स्याद् यस्यां क्षणमपि तया कि क्षणदया
भृशं संक्लिष्टं नौ हृदयममुयाऽदूयत मुधा ।। ३८ ।।

प्रभातायां तस्यामुदयमुपयाते दिनमणौ
नदीवेगे शान्ते सति घटनमावामतनुव ।
मिथः कृत्वाऽऽश्लेषं निधुवनविशेषं च बहुश
सकृद्धासं चाथ व्यतनुव सकृच्चापि रुदितम् ।। ३९ ।।

उभौ वारं वार विरहघटनां प्रागघटितां
पुनः स्मारं स्मारं व्यतनुव सहासं प्ररुदितम् ।
सदैवेत्थंकारं व्यपगतविचारं विलपतो-
र्गतो भूयान् कालो गिरिपरिसरे नौ विहरतो ।। ४० ।।

वियोगोऽसौ यस्यामजनि रजनी सातिविषमा
न शक्यापि स्मर्तुं, किमुत पुरतो द्रष्टुमधुना ।
अमुष्याः पापायाः स्फुटमुपनतायां विधिवशाद्
इतः सप्ताब्दानां त्रिरहितशतानि व्यतियमुः ।। ४१ ।।

विहायामूं रात्रिं सततमयुताभ्यामनुनिशं
स्मरद्भ्यामावाभ्यां सरससुभगाः स्वाः प्रियकथाः ।
चिरं भ्रामं भ्रामं गहनवनभूशैलशिखरे
महीयान् कालोऽयं गुरुविरहशोकेन गमितः ॥ ४२ ॥

इति श्रुत्वाश्चर्यामविदितचरीं किन्नरयुग-
प्रवृत्तिं तामेतां नरपतिरसावित्थमगदत् ।
युवां चेज्जानीथस्तदभयमसन्दिग्धमुभयोः
वयो वृद्धप्रोक्तं प्रकटयत किं साम्प्रतमिति ॥ ४३ ॥

ततः किन्नर्यूचे स्थिरमवियुतं प्रेम दधतो-
र्वयो नौ वर्षाणामपि नृप ! सहस्रं समुदितम् ।
वयो वृद्धैः सिद्धैर्निगमपरिशुद्धैरविकलं
तथादिष्टं दिष्टं सुखमयमभीष्टं च सकलम् ॥ ४४ ॥

भविष्यत्येतस्मिन्नपि वयसि काचिन्न च रुजा
न वा भूयो दुःखं नृपवर ! महाव्याधिरथवा ।
वपुः स्वस्थं, चेतोऽप्यरतिरहितं नौ प्रणयिनो-
र्मतः प्रेमस्थेमा जगति परमं भेषजमिह ॥ ४५ ॥

भवे दुःखं स्वल्पं, सुखमधिकमावामनुदिनं
प्रतीवस्त्याज्योऽयं न भवति कदाचित् सहृदयैः ।
वियोगे स्त्रीपुंसौ प्रणयकलहे वा सति पुन-
र्मिथः प्रीतिं स्निग्धौ कथमपि न मुग्धौ श्लथयताम् ॥ ४६ ।

अये राजन्नस्मिञ्जगति सुखदं प्रेम परमं
परं तत्त्वं ज्ञेयं, तदितरदसद् वस्तु सदपि ।
भवेद् भारो ह्येकं दिवसमविषह्यो विरहिणो
विना प्रेयांसं कः प्रभवति पुमाञ्जीवितुमपि ॥ ४७ ॥

गुणश्लाघ्ये नित्यं हृदयनिहिते प्रीतिसहिते
मनः सीदत्येव क्षणमपि वियुक्ते प्रियजने ।
जगच्छून्यं भाति प्रदहति च सत्प्रेमरहितं
जनः प्रेम्णा युक्तः सततमवियुक्तः सुखमियात् ।। ४८ ।।

अतो यावज्जीवं हसितरुदिताद्यैर्विलसितै-
र्यथावन्नेष्यावो ननु समयमावां रसमयम् ।
स्वपोषं पुष्णन्तौ व्यवहृतिविदौ चापि नितरां
मिथः संजानानावधि भुवि परां निर्वृतिमितौ ।। ४९ ।।

समाकर्ण्याश्चर्यैकटुकमधुरं वृत्तमुभयो-
स्तदा जातोद्वेगः स्वगतमविचिन्तन्नरपतिः ।
इदं द्वन्द्वं धन्यं यदमनुजजन्माप्यतिचिरं
रुदत् क्रन्दद् भ्राम्यद् दयितविरहं न व्यषहत ।। ५० ।।

निशायामेकस्यां विरहमुपजातं प्रतिपदं
स्मरन्तौ तावेतौ प्रणयपरिपाटीपरिचितौ ।
स्मरोत्तप्तौ सप्त प्रियहितरतौ हायनशता-
न्यटाट्यां कुर्वन्तौ सरिति गमयाञ्चक्रतुरुभौ ।। ५१ ।।

अधन्योऽहं राजा धृतनरवपुर्योजनशत-
त्रयस्याधीशः सन् न खलु विदधे कामपि कृतिम् ।
वृथैवारण्यानीं स्वजनरहितोऽटामि विकटा-
महो धिङ् मां मुग्धं मृगपिशितलुब्धं क्षितिपतिम् ।। ५२ ।।

विविच्यैतत्सर्वं नरपतिररण्यान्निववृते
गतो वाराणस्यामुचितनिजकार्ये प्रववृते ।
अमात्यैः सम्पृष्टो हिमवति गिरौ दृष्टमखिलं
निवेद्यादो वृत्तं सदसि चिरवृत्तञ्च मुमुदे ।। ५३ ।।

ततः पुण्यैर्यज्ञैर्धनवसनदानादिभिरसौ
सदाचारैर्युक्तो भुवमनुशशास स्थिरमतिः ।
प्रियः शान्तस्वान्तः स भवगतलोकव्यवहृतिः
परं लब्ध्वानन्दं भुवनतलसौख्यानि बुभुजे ।। ५४ ।।

अहं ह्येवाभूवं नरपतिरयं जन्मनि पुरा
तदा शास्तेत्याख्यः प्रकटितदयः शुद्धहृदयः ।
नरश्चास्मिन् द्वन्द्वेऽभवदथ भवान् कोशलपते !
तथा किन्नर्यासीत् चिरविरहिणी तेऽग्रमहिषी ।। ५५ ।।

द्वयोः प्रेम्णो मूर्त्योरधृतनरयोन्योरपि सतो-
स्तयोरेतद्वृत्त हृदि समवधत्तं ननु युवाम् ।
मिथः प्रीतौ सन्तौ जगति कलहं मा स्म कुरुत
निजे दोषे जातेऽप्यधिकमनुतप्तौ न भवतम् ।। ५६ ।।

यथैकां हा रात्रिं प्रणयविरहादेव युगलं
तदुन्मत्तं भूत्वा कियदवधि सन्तापमभजत् ।
तथा हा मा भूतं भयविरहशोकाद्युपहता-
वियं शिक्षाऽऽदेया भवति कथया नित्यमनया ।। ५७ ।।

अहो धन्यः कश्चिद् वचनरचनाया मधुरिमा
सतां वाचीत्युक्तिः क्वचिदपि मृषा नैव भवति ।
यतः श्रीबुद्धस्यामृतवदुपदिष्टं श्रुतवत-
स्तदानीं भूजानेरगलदखिलं संशयमलम् ।। ५८ ।।

श्रुतं मल्लीदेव्याप्यमृतमधुरं तद् भगवतो
वचः प्रेयः श्रेयः प्रवणमखिलक्लेशहरणम् ।
असौ श्रद्धाबद्धाञ्जलिरतिशयाकृष्टहृदया
स्तुवाना श्रीबुद्धं सविनयमिदं वाक्यमवदत् ।। ५९ ।।

महात्मन् ! बुद्धोऽसि त्वमिह शरणं मेऽति बलवद्
दुरुच्छेद दुःखं सपदि समुदच्छेदि भवता ।
यदादिष्टं तत्तत् सकलमपि कर्त्तास्मि भगवन्
जुषाणा भर्तारं पदमहमवाप्तास्मि परमम् ॥ ६० ॥

महीपोऽपि श्रीमद्भगवदनुशिष्टं तदमृतं
निपीयानन्दाब्धि परमवजगाहेऽभिलषितम् ।
बहुश्रेयस्यात्मप्रियदयितया सार्धमनिशं
यशो बिभ्रत् पुण्यैः सुचिरमशिषत् कोशलभुवम् ॥ ६१ ॥

भल्लाटियाख्यानमिदं विदित्वा
समल्लिकाकोशलभूपवृत्तम् ।
श्रुत्वा पुनः किन्नरविप्रयोगं
पवित्रमुच्चैः क्रियतां चरित्रम् ॥ ६२ ॥

चमत्करोतीह भृशं कथायामसौ द्वयोः किन्नरयोर्वियोगः ।
अटन्नटव्यां मृगयाप्रसक्तो भल्लाटियोऽप्याचक्षे हि येन ॥ ६३ ॥

श्रीकोशलेशो विदितात्मदोषो भूत्वा विशेषेण निरस्तरोषः ।
स्त्रीतल्लजायाः निजवल्लभायाः श्रीमल्लिकायाः प्रणयी बभूव ॥ ६४ ॥

भुवि प्रसिद्धेन महात्मना श्रीबुद्धेन रुद्धेन्द्रियवृत्तिनेयम् ।
मनोविनोदाय सतामुदारा कथाऽकथीत्येव सदावधेयम् ॥ ६५ ॥



# नवमः सर्गः

(वसन्ततिलकावृत्तम्)

वाराणसी सुपुरमध्यवसत् प्रबुद्धः
प्राग् ब्रह्मदत्तनृपतिर्व्यवहारशुद्धः ।
आनन्दयन् स्वजनतां भगवत्प्रसादाद्
धर्मेण शासदवनीं विधिवद् य आभात् ।। १ ।।

प्राज्यं स्वराज्यमधिकृत्य नराधिनाथे
तस्मिन् प्रशासति महीं सुयशः सनाथे ।
ग्रामे क्वचिज्जनिमलब्ध कुले द्विजानां
बुद्धः स्वयं स भगवान् महितः प्रजानाम् ।। २ ।।

लब्धोदये भगवति स्पृहणीयमूर्तौ
बुद्धे महात्मनि तदा महनीयकीर्तौ ।
ग्रामस्य तस्य नचिराद्रुचिराऽऽदिगन्तात्
सौभाग्यमप्यभवतामुदिते समन्तात् ।। ३ ।।

जातः क्रमेण ववृधे वयसाभिरूपः
सत्यक्षमार्जवदयादिगुणैः सुरूपः ।
सद्योऽनवद्यविविधागमलब्धविद्यः
कृष्यादिकर्मनिपुणः शशुभे स हृद्यः ।। ४ ।।

भूत्वा युवार्यमतिराद्रियताल्पमात्रां
भार्यान्वितः कृषिपरः स शरीरयात्राम् ।
आसीद् गृहेऽस्य तनयस्तनया च रम्यं
पुण्यादपत्ययुगलं विनयोपपन्नम् ।। ५ ।।

बाल्यात्परं वय उपेयुषि यूनि जाते
भूयो गृहीतविनये तनयेऽभिजाते ।
आहारयद् गृहममुष्य कृते स धन्यां
योग्यां समानकुलजां परिणाय्य कन्याम् ॥ ६ ॥

एका च दास्यपि तया सह कन्ययाऽयात्[1]
सेवार्थमाहितनया विनयान्विताऽऽयात् ॥
इत्थं समे मधुरिमाणमतीव भेजुः
षट् प्राणिनः प्रणयिनो गृहिणो विरेजुः ॥ ७ ॥

सर्वेषु तेषु गुणवत्स्वपि शुद्धसत्त्वः
प्रीत्या मिथो व्यवहरत्सु स बोधिसत्त्वः ।
वैशिष्ट्यमिष्टमुपधातुमुदात्तवृत्तः
कर्तुं प्रशस्तमुपदेशमिमं प्रवृत्तः ॥ ८ ॥

यूय प्रियाः श्रृणुत मद्वचनं विशिष्टं
निःश्रेयसाभ्युदयकारि पवित्रमिष्टम् ।
शीलं न लोपयत साध्वनुकारि गुण्यं
पापात् सदा विरमताऽऽचरताथ पुण्यम् ॥ ९ ॥

वित्तं प्रदत्त निजशक्तिमपेक्ष्य नित्यं
वित्ताशु नश्यदखिलं जगदप्यनित्यम् ।
नैव स्थिरीभवति किञ्चिदपीह वस्तु
कल्याणिनीति मतिरेव चकास्तु वस्तु ॥ १० ॥

वैराग्यमाश्रयत मोहमुदस्यतालं
मृत्युं ध्रुवं समवगच्छत सर्वकालम् ।
सम्यङ् नियम्य विषयान्निजचित्तवृत्तिं
दानादिसद्व्रतविधौ तनुत प्रवृत्तिम् ॥ ११ ॥

---

१—अयात्–शुभावहदैवादित्यर्थः ।

दैनन्दिनं तनुभृतो मरणं लभन्ते
शोकावहा परिणतिर्भवतीयमन्ते ।
आयव्ययक्षययुता नचिरप्रभावा
भावा विभान्त्यनुपदं पतनस्वभावाः ॥ १२ ॥

ध्येयं समस्तजगतः क्षणभङ्गुरत्वं
दुःखास्पदत्वमरसत्वमसुस्थिरत्वम् ।
प्रेयो विहाय परमार्थरताः प्रकामं
श्रेयस्करं कुरुत कर्म गुणाभिरामम् ॥ १३ ॥

लोकं विलोक्य सकलं क्षणदृष्टनष्टं
वक्त्रे यमस्य निपतन्तमवाप्तकष्टम् ।
धीराः प्रमादरहिता विषयाप्रसक्ताः
शान्ताः स्थिरा विचरतेह भवे विरक्ताः ॥ १४ ॥

इत्याद्यनिन्द्यमभिनन्द्यगुणैरुपेतं
सद्युक्तिसंगतमनिष्टपथादपेतम् ।
बुद्धोऽन्वशान्निजगृहोन्नतिमिच्छुरार्यः
सदृष्टनैकविधलोकहितैककार्यः ॥ १५ ॥

अभ्यर्हितं तदुदित प्रणयाद्यहीनं
कृत्वा वचः श्रुतिपथातिथिमात्मनीनम् ।
ते पूर्वतोप्यधिकमात्मनि सावधानाः
स्वस्था विचेरुरवधीरितमोहमानाः ॥ १६ ॥

भूमिं हलेन कृषति स्म कदापि बुद्धः
क्षेत्रं गतो द्विजवरः स तपोविशुद्धः ।
पुत्रश्च शुष्कतृणकण्टकमन्तिकस्थम्
तत्राग्निना प्रदहति स्म कृतव्यवस्थः ॥ १७ ॥

धूमादभूदनलजादुपजातदर्पः
पार्श्वे वसन् विषधरो विवरस्थसर्पः ।
क्रुद्धो भृशं स्वविवराद् बहिरेत्य तूर्णं
दन्तैश्चतुर्भिरदशत् तनय स पूर्णम् ।। १८ ।।

दष्ट· क्षणेन तनय. स तु मृत्युमापद्
हा हन्त ! तत्र महतीयमुपस्थिताऽऽपत् ।
विप्र· समीक्ष्य मृतमात्मजमात्मलीनस्
त्यक्त्वा हल निकटमैन्मृतशोकहीनः ।। १९ ।।

उत्थाप्य तं सपदि विप्रकुलावतंसः
शान्तो न्यधात् तरुतले निजमात्मजं सः ।
संप्रावृणोच्च वसनेन विचारशील·
प्रध्वस्तवैषधिकमोहमदप्रमील ।। २० ।।

नासौ रुरोद विबुधो न शुशोच किञ्चित्
प्राणाधिके निजसुतेऽपि मृते कथञ्चित् ।
संसारमध्यपतितः सकलोऽप्यसारः
प्राणीति तत्त्वविदवास्थित निर्विकारः ।। २१ ।।

प्रध्वंसि वस्तु यदनित्यमिहाध्वसत् तद्
यन्न ध्रुवं क्षणमपि भ्रियतां कुतस्तत्
इत्याकलय्य बलवन्मनसाऽमलेन
कर्तुं कृषिं प्रववृते स पुनर्हलेन ।। २२ ।।

अत्रान्तरे निजगृहं प्रति यान्तमेकं
मर्त्यं व्यलोकयदय श्रितसद्विवेकम् ।
अब्रूत चान्तिकमुपेतममुं विचार्य
मद्गेहिनीमिति वचः कथय त्वमार्य ! ।। २३ ।।

भो ब्राह्मणि ! प्रियतमः कृषकस्तवेदं
वाक्यं ब्रवीति सरलो विरहय्य खेदम् ।
आकर्ण्यतां क्षणमनुव्रतया त्वयादः
संगृह्यतां समनुपाल्य च तत्प्रसादः ॥ २४ ॥

प्रेष्यं त्वयाद्य किल केवलमेककस्य
भोज्यं जनस्य, न पुनर्मनुजद्विकस्य ।
सर्वं कुटुम्बकमुपैतु च शुद्धचेलं
क्षेत्रं स्वहस्तधृतगन्धसुमं सहेलम् ॥ २५ ॥

भार्या स्नुषासहकृता तनया च दासी
सर्वोऽस्तु तद् गृहभवोऽद्य तु वप्रवासी ।
दास्येव भोज्यमुपगृह्य न यातु, किन्तु
स्वक्षेत्रभूमिमखिलाः प्रतिसंचलन्तु ॥ २६ ॥

विप्रस्य तद्वचनमाशु निशम्य सोऽपि
तस्यैद् गृहं सकलदुष्टविकारलोपि ।
ऊचे तदुक्तमुचितं च तदीयभार्या
कार्यं विचार्य समये करणीयमार्याम् ॥ २७ ॥

आकर्ण्य पत्युरुदितं द्विजभार्ययापि
प्रत्युत्तराय न तदा क्षणमप्युदैक्षि ।
पृष्टः स साधु पुरुषः किमिदं गरीयः
स्वामी भवन्तमवदद् वचनं मदीयः ॥ २८ ॥

मर्त्ये तथेत्यभिदधत्यथ विप्रभार्या
कार्यान्तरादुपरतेत्थमवोचदार्या ।
मत्स्वामिना कथितमस्ति यदार्य तथ्यं
तत्पालयेऽहमधुनैव विबुध्य पथ्यम् ॥ २९ ॥

पुत्रस्य मृत्युरजनीति मनः समाधे-
ज्ञातं मया न विकलास्मि पुनस्तदाधेः ।
एकस्य भोजनमतः स मदीयभर्ता
प्रैष्य स्वय निरदिशत् कृषिकार्यकर्ता ॥ ३० ॥

मन्ये मदीयतनयो विनयोपपन्नः
प्रच्छन्नपन्नगकृताद् दशनाद् विपन्नः ।
प्राणैर्व्ययुज्यत युवा नियतेर्नियोगात्
किं स्यान्मृते पुनरिहौषधसम्प्रयोगात् ॥ ३१ ॥

इत्यूचुषी विषयरागजदोषहीना
भार्या द्विजस्य परमात्मविचारलीना ।
उद्वेगमात्रमपि नानुबभूव कान्ता
स्वस्थेन्द्रिया मतिमती शुशुभे प्रशान्ता ॥ ३२ ॥

शुद्धान्तरा विगतमोहमलाऽऽत्तभक्षा
पत्युस्तदा प्रणयिनी स्वविधौ प्रसक्ता ।
धृत्वा सुगन्धि कुसुमं स्फुटमन्दहासा
क्षेत्रं ययौ परिजनेन समं सुवासाः ॥ ३३ ॥

तत्र स्थिताः समुदिताः सकलाः स्वमिष्टं
दृष्ट्वा विनष्टमपि तेऽन्वभवन् न कष्टम् ।
नाक्रन्दिषुर्न रुरुदुर्न च मृत्युभीताः
संजज्ञिरे विधिवदात्मनि सम्प्रतीताः ॥ ३४ ॥

विप्रः कथं नु प्रणिभाल्य मृत स्वतोक
सांराविणं वितनुयात् प्रकटय्य शोकम् ।
मूर्धन्य एष सकलेष्वपि तेषु धन्यः
श्रेयान् मतोस्ति सदने न यतस्तदन्यः ॥ ३५ ॥

पुत्रो मृतस्तरुतले निहितस्तदासीद्
यत्र द्विजः समुपविश्य स भोज्यमाशीत् ।
सर्वैस्ततः समुदितैर्मुदितैश्च तस्य
काष्ठान्युपाधिषत तत्र तनौ मृतस्य ॥ ३६ ॥

तेऽभ्यर्च्य गन्धकुसुमैश्च वपुस्तदीयं
प्रज्वाल्य वह्निमदहन् विधिवत्समन्त्रम् ।
नैवाश्रुबिन्दुरपि कस्यचनाविरासीन्
मृत्योः स्मृतिः प्रतिपदं विशदाऽचकासीत् ॥ ३७ ॥

दुर्दान्तमोहमदनाशनबद्धकक्षाः
शुद्धात्मरूपपरिचिन्तनलब्धलक्षाः ।
तेऽनाकुलाः सति भयेऽप्यभुरेकनिष्ठा
सत्त्वप्रधानचितिशक्तिकृतप्रतिष्ठाः ॥ ३८ ॥

वैराग्यपूर्णमनसो जितरागदोषान्
सर्वानमून् प्रकटसंचितपुण्यकोषान् ।
ख्याति गतानधि जगत्युपलभ्य शक्रः
[1]स्वस्थोऽप्यतद्गुणासहिष्णुतयाऽऽस्त वक्रः ॥३९॥

स ज्ञानवानपि भवन् व्यचिचिन्तदेवं
को मां चिकीर्षति पदच्युतमत्र देवम् ।
व्यज्ञायि तेन मनसः प्रणिधानतो द्राक्
विप्रस्य तत् सुचरितं यदुदीरितं प्राक् ॥ ४० ॥

सोऽमुष्य शीलमतिनिर्मलमालुलोके
प्रीतोऽभवच्च तदुदीक्ष्य मनुष्यलोके ।
कौतूहलान्निजसमाधिबलान् मृतस्य
दाहक्रियास्थलमुपैदवनीस्थितस्य ॥ ४१ ॥

---

१—स्वर्गस्थितोपीति श्लिष्यते ।

गत्वान्वयुङ्क्त च परीक्षितुमिच्छुरेवं
किं त्वं करोषि भगवन्निति भूमिदेवम् ।
तेनोक्तमत्र मृतमार्य वयं दहामः
श्रीमन्न नस्तदितरः खलु कोपि कामः ॥ ४२ ॥

इन्द्रोऽब्रवीन्न मनुजं मृतमग्निदग्धं
यूयं विधत्थ, वचनं किल वो विदग्धम् ।
हत्वा मृगं तु पचथैकमितीव शङ्के
कष्टे निमज्जथ सुदुस्तरपापपङ्के ॥४३॥

विप्रस्त्ववोचदयि ते क्रियते प्रणामः
सत्यं मृतं मनुजमत्र वयं दहामः ।
मा शङ्कि चाणुरपि दुस्तरपापपङ्कः
सत्प्राणिहिंसनमिहास्ति यतः कलङ्कः ॥४४॥

इन्द्रोऽभ्यधत्त रिपुरेष भवेन्नु कश्चिद्
यं निर्घृणं पचथ संनिहितं कुतश्चित् ।
विप्रोभ्यधान्न रिपुरस्ति, परं प्रशस्यः
सूनुर्न एष भगवन् व्यसुरस्त्युरस्यः ॥ ४५ ॥

पुत्रोस्ति मे प्रियतरोऽयमनिन्द्यवृत्तः
क्षेत्रे स्वयं यमिह दग्धुमहं प्रवृत्तः ।
प्राणाधिकः प्रियतमो बहुधा हितोऽयं
यस्मिन् मृते पितृषु मेऽवसितं हि तोयम् ॥ ४६ ॥

इन्द्रोऽवदद् यदि सुतोऽस्त्वधिकप्रियोऽयं
कस्मान्न रोदिति भवान् ? विधिरस्ति कोऽयम् ।
प्रेष्ठे सुते विनयशालिनि यूनि नष्टे
रोरुद्यते सकल एव यतो विशिष्टे ॥४७ ॥

विप्रस्तदा वचनमाख्यत युक्तियुक्तं
सश्रूयतां मम महाशय ! सत्यमुक्तम् ।
सर्पो यथा त्यजति निर्ल्वयनी स्वकीयां
तद्वत् तनु तनुभृदुज्झति वर्जनीयाम् ॥ ४८ ॥

जाते वपुष्यभिमताखिलभोगहीने
कालक्रमेण विगतासुनि तत्त्वलीने ।
दग्धोग्निना भवति देह्यत एष किञ्चिज्
जानाति नेष्टजनरोरुदितं कथञ्चित् ॥ ४९ ॥

शोचाम्यतो न खलु, रोदिमि नैव चाहं
स्वस्थः स्थितोस्म्यनुभवामि न दाहदुःखम् ॥
यादृङ् मृतो व्यधित कर्म, गतो गतिं तां
कुर्यां तदर्थमहमत्र कथं नु चिन्ताम् ॥ ५० ॥

रुच्य वचो द्विजवरस्य निशम्य शक्रः
सन्तोषमापदनुरञ्जितलोकचक्र. ।
भार्याममुष्य पुनराह वद त्वमार्ये !
कस्ते मृतः स भवति स्म गृहस्थकार्ये ॥ ५१ ॥

सोवाच साधुपरिपालितलोकयात्रः
संहृष्टतुष्टपरिपुष्टसमस्तगात्रः ।
मासान् दशोदरगतः प्रियसच्चरित्रः
पीतस्तनो मम सुतोऽयमभूत् पवित्रः ॥ ५२ ॥

शक्रो निशम्य निजगाद पिपृच्छिषुस्तां
श्रद्धाविवेकमृदुतादिगुणैः प्रशस्ताम् ।
कामं न रोदितु पिता परमंग माता
स्यादात्मजं प्रति कुतो नहि दुःखजाता[1] ॥ ५३ ॥

---

१—जातं दुःख यस्या इति बहुव्रीहिः । निष्ठायाः परनिपातो भवति ।

यस्याः प्रसिध्यति सुकोमलमानसत्व
प्रायः स्वसन्ततिषु दुस्त्यजमोहवत्त्वम् ।
सा त्वं जनन्यभिमता तनयस्य नूनं
कस्मान्न रोदिषि चिरं विरहादनूनम् ।। ५४ ।।

भार्याऽभ्यधाच्छृणु वचो भगवन् ममेदं
नाह वहामि तनयं प्रति मोहखेदम् ।
दग्धोऽग्निना भवति देह्यत एष किञ्चिज्
जानाति नेष्टजनरोरुदितं कथञ्चित् ।। ५५ ।।

आकारितो न मम पार्श्वमुपागमत् सः
प्रायादितश्च तनुजः स्वयमप्रयुक्तः ।
एतो यथा गृहमिद स पुनस्तथैतः
क्लेशं कथ वहतु तत्र मुधैव चेतः ।। ५६ ।।

शोचाम्यतो न खलु रोदिमि नैव चाह
स्वस्था स्थिताऽस्म्यनुभवामि न दाहदुःखम् ।
यादृङ् मृतो व्यधित कर्म, गतो गतिं तां
कुर्या तदर्थमहमत्र कथं नु चिन्ताम् ।। ५७ ।।

शक्रस्ततस्तदनुजामवदत् स्वसारं
भद्रेऽभिधेहि विशदय्य निजं विचारम् ।
कस्ते मृतो भवति स स्म गृहस्थकार्ये
सम्बन्धिनी भवसि तस्य कुतस्त्वमार्ये ।। ५८ ।।

साऽब्रूत पूतहृदया विनयावदाता
लघ्वी स्वसेह भगवन्नहमस्य जाता ।
भ्राताऽभवन् मम सहोदर एष आर्यः
स्निग्धः सुशिक्षितसमस्तगृहस्थकार्यः ।।५९।।

शक्रोऽभ्यधादयि ! वचोऽस्ति तवाविरुद्धं
भ्रातृप्रियैव भगिनीति जगत्प्रसिद्धम् ।
कस्मान्न रोदिषि भृशं विहितादरस्य
प्रेमाकुलाऽद्य विरहात्तव सोदरस्य ।। ६० ।।

प्रत्यब्रवीत् तदनुजा न गृहे चकास्यां
रुद्यामहं यदि भृशं, वपुषा कृशा स्याम् ।
शोकेन मां परिगतां विमनायितास्या
वीक्ष्यारुचिश्च सुहृदां भवितोपहास्याम् ।। ६१ ।।

लाभश्च कः प्ररुदितेन भविष्यतीति
ज्ञात्वैव दग्धहृदयं किल शंशमीति ।
दग्धोऽग्निना भवति देह्यत एष किञ्चिज्
जानाति नेष्टजनरोरुदित कथञ्चित् ।। ६२ ।।

शोचाम्यतो न खलु, रोदिमि नैव चाहं
स्वस्था स्थितास्म्यनुभवामि न दाहदुःखम् ।
यादृङ् मृतो व्यधित कर्म, गतो गतिं तां
कुर्यां तदर्थमहमत्र कथं नु चिन्ताम् ।। ६३ ।।

शक्रः स्वसुः समतुषन्मधुरैर्वचोभि-
र्जज्ञौ च तद्हृदयमुच्चविचारशोभि ।
आख्यत्पुनः सुचरितां दयितां मृतस्य
भद्रेऽस्य का त्वमभवः स्वगृहस्थितस्य ।। ६४ ।।

तत्पत्न्युवाच भगवञ्छृणु साधुकर्मा
भर्तायमास्त गृहकर्मणि मे सधर्मा ।
भार्या प्रिया प्रणयिनोऽहमभूवमस्य
गाम्भीर्यधैर्यबलवीर्यसमन्वितस्य ।। ६५ ।।

स प्राह भर्तृरहिता न समुल्लसन्ति
पत्न्यो मृते प्रियतमे विधवा भवन्ति ।
दुर्वृत्तदैवहतकेन कृते विघाते
कस्मान्न रोदिषि दिवं दयिते प्रयाते ।। ६६ ।।

सा प्राह नैतदुचितं भवताभ्यधायि
पत्यौ मृते प्ररुदितं विधिना व्यगायि ।
बालो यथेन्दुमनवाप्य मुधा प्ररुद्याद्
व्यर्थं मृते विलपितं च तथैव विद्यात् ।। ६७ ।।

पूज्यः स मे प्रियतमश्च पतिः सदासीत्
सत्यं मयि प्रणयवान् सुचिरं व्यलासीत् ।
दग्धोऽग्निना भवति देह्यत एष किञ्चिज्
जानाति नेष्टजनरोरुदितं कथञ्चित् ।। ६८ ।।

शोचाम्यतो न खलु, रोदिमि नैव चाहं
स्वस्था स्थितास्म्यनुभवामि न दाहदुःखम् ।
यादृङ् मृतो व्यधित कर्म, गतो गतिं तां
कुर्या तदर्थमहमत्र कथं नु चिन्ताम् ।। ६९ ।।

दासीमनन्तरमुवाच स साधुशिष्टां
निष्ठां गतां द्विजवरस्य गृहे विशिष्टाम् ।
भद्रे ! निवेदय मृतस्तव कोऽयमासीत्
क्षिप्रं नवे वयसि यः स्वतनूमहासीत् ।। ७० ।।

दास्या निवेदितमयं भगवन् मदीयः
सेव्यो महामतिरभूदभिनन्दनीयः ।
धीरो युवा समुचितार्थनिवेदिकायां
नित्यं दयां स्म कुरुते मयि सेविकायाम् ।। ७१ ।।

पर्यन्वयुङ्क्त स पुनः परिचारिकां तां
जिज्ञासुरार्यचरितां हृदयेन शान्ताम् ।
कार्ये कदापि विगुणेऽनवधानजन्ये
त्वां बह्वताडयदयं बहुधेति मन्ये ।। ७२ ।।

हेतोरतः किमपि न त्वमिह ब्रवीषि
खिन्नाऽथवा प्ररुदिता न च बोभवीषि ।
जानासि यो ह्यर्दपिपीडदनर्थकारी
स्थाने मृतः स करुणारहितोऽधिकारी ।।७३ ।।

दास्यब्रवीत् भगवता न कदापि वाच्यं
मत्स्वामिनं प्रति मृषोद्यमिद हि वाच्यम् ।
यो मामपुष्यदखिले दुरितेऽप्यरोषं
पश्यामि तस्य कृतिनः कथमत्र दोषम् ।। ७४ ।।

मैत्रीदयासरलतास्थिरतातितिक्षा—
शान्त्यादिसद्गुणयुताऽभवदस्य शिक्षा ।
नासौ मुधाऽक्रुधदनार्य इवात्र लोके
साधुस्वभावमिममार्यमहं व्यलोके ।। ७५ ।।

कस्मान्न रोदिषि मृतेपि तदेति पृष्टा
सा प्रत्युवाच रमणीयगुणा प्रहृष्टा ।
किं रोदनेन पुनरेष्यति सोऽत्र गेहे
यस्याभवन्न वशितोपरतस्य देहे ।।७६ ।।

सङ्क्षस्यते जलघटो न यथार्य ! भग्नः
कश्चेतनो भवति तेन च दुःखमग्नः ।
एवं मृतं जनमुदीक्ष्य कदापि कश्चित्
खेदं मुधा न वहतीह वशी विपश्चित् ।। ७७ ।।

यातो दिवं विधिवशात् स तु देहभिन्नः
शोच्यो जनो भवति बन्धुवियोगखिन्नः ।
दग्धोग्निना भवति देह्यत एष किञ्चिज्
जानाति नेष्टजनरोरुदितं कथञ्चित् ।। ७८ ।।

शोचाम्यतो न खलु, रोदिमि नैव चाहं
स्वस्था स्थितास्म्यनुभवामि न दाहदुःखम् ।
यादृङ्मृतो व्यधित कर्म, गतो गतिं तां
कुर्यां तदर्थमहमत्र कथं नु चिन्ताम् ।। ७९ ।।

आचम्य वाचमुचितां स सतां प्रणम्यः
प्रीतिं परामुपगतो विबुधोपगम्यः ।
तृप्तः सगद्गदमथ न्यगदत् समस्तान्
पञ्चापि पञ्चविषयोपरतान् प्रशस्तान् ।। ८० ।।

इष्टं परीक्षितमिदं विहितं मया वः
सम्प्रैक्षि रागरहितो विमलश्च भावः ।
आशीरियं मम, सदैव समुल्लसन्तः
सर्वे भवन्तु सुखिनः कृतिनो भवन्तः ।। ८१ ।।

यूयं ह्युदात्तमतयो गृहिणोपि धन्या
नेतादृशाः सुकृतिनो विलसन्ति वन्याः ।
सिद्धिं लभध्वमभितो विनिवृत्तरागाः
सर्वश्चकास्तु भवतां मुदितो निरागाः ।। ८२ ।।

युष्माभिरात्तविनयैरुपशान्तचित्तैः
सर्वैरभावि मरणस्मरणेऽप्रमत्तैः ।
नेष्टे मृते निजजनेपि कृता प्रसक्तिः
प्रीत्याऽऽदृता च विषयेष्वनिशं विरक्तिः ।। ८३ ।।

भव्या भवन्ति भुवनेषु भवादृशा ये
नैवासजन्ति वितते प्रकृतेर्निकाये ।
प्रीतोस्म्यतोऽत्र भवतोऽभ्युदयं प्रकुर्वे
शृण्वन्तु मे प्रियतरं वचनं च सर्वे ॥ ८४ ॥

ज्ञेयं भवद्भिरहमस्मि सुराधिराजः
क्लिश्ये विलोक्य भवतः कृषिकार्यभाजः ।
नातः परं श्रमकरं कृषिकर्म कार्य
सर्वैरपीदमुदितं हृदयेऽवधार्यम् ॥ ८५ ॥

रत्नानि सप्त भवतां भवने ददामि
सौख्यं समृद्धिमतुलाञ्च सहादधामि ।
सम्भुज्यतां विपुलसम्पदियं निकामं
संस्मर्यतां च परतत्त्वमिहाविरामम् ॥ ८६ ॥

कृष्या कृतं, जगति यावदियं धरित्री
तावद् विभूतिरचला भवने भवित्री ।
दानं व्रतं सततमाचरतैकचित्ताः
सानन्दमात्मनिरता भवताप्रमत्ताः ॥८७॥

प्राप्तोत्तमप्रकृतिचारुविशिष्टदेवाः
सत्यव्रता विहितवृद्धजनोपसेवाः ।
विद्यागमं स्थिरसुखप्रदमाश्रयध्वं
मृत्योः परं तदमृतं च पदं लभध्वम् ॥ ८८ ॥

इत्युक्त्वा मधुरां गिरं सुरपतिस्तेषां समेषां गुणै-
राकृष्टो बिभरांबभूव भवनं रत्नैः शुभैः सप्तभिः ।
तेऽप्यापुर्मुदमुत्तमां प्रविततां सम्प्राप्य तां सम्पदं
क्षिप्रं विप्रपुरःसराः सविनयं सर्वे प्रणेमुश्च तम्॥८९॥

शक्रश्चाप्युपदिश्य वश्यकरणान् स्वस्थान् गृहस्थानमून्
स्वीयं धाम जगाम कामरहितानप्याप्तकामान् पुनः ।
पुत्रादावपि यत्र नास्त्यतिरतिर्वैराग्यसौभाग्यवान्
प्रेयान् सोऽयमनुत्तमो विजयतां श्रेयान् गृहस्थाश्रमः ॥६०॥

( उपजातिवृत्तम् )

द्विजो गृहस्थोपि यथा प्रबुद्धो बभौ स्वसम्बन्धिषु वीतरागः ।
तथास्तु सर्वः कथयानया श्रीबुद्धः स्वयं बोधयतीह तत्त्वम् ॥६१॥
अनित्यमेतत् क्षणदृष्टनष्ट कष्टं जगत् सारविहीनमस्ति ।
ज्ञात्वा तदेकं स्थिरमात्मतत्त्वं भवन्तु सर्वेऽप्यमृताः शमित्योम् ॥६२॥

---

# दशमः सर्गः

( मालिनीवृत्तम् )

मगधजनपदस्थे प्राक् पुरे राजगेहे
नृपतिरभवदेकः सावधानः स्वदेहे ।
विमलमतिरुदारः कीर्तिमान् यो वदान्यः
समुचितमचकासीत् पुण्यवान् सर्वमान्यः ॥ १ ॥

वसतिमकृत दैवात् पत्तने तत्र बुद्धः
सकरुणहृदयः श्रीबोधिसत्त्वः प्रबुद्धः ।
दधदभिनवशोभां सङ्घनाम्ना प्रसिद्धः
प्रचुरधनसमृद्धः श्रेष्ठिमुख्यः समिद्धः । २ ॥

प्रथितमजनि यस्याशीतिकोटीश्वरत्व
मृदुलविनयवत्त्वं लोकसेवापरत्वम् ।
धनपतिरपि भूत्वा यो रराजातिनम्रः
सकलजनमनांस्यावर्जयन्नास्त कम्रः ॥ ३ ॥

सुहृदपि च तदैकस्तस्य वाराणसीं श्री-
पुरमधिवसति स्म श्रेष्ठिवर्योऽविगेयम् ।
सुचिरपरिचितो यः पीलियाख्यश्चकाशे
धनमभवदशीतिः कोटयो यत्सकाशे ॥ ४ ॥

उभयमभयगाढप्रीतिमत् तुल्यसम्पत्
[1]स्वपतियुगलमेतत् सौख्यमन्योन्यमापत् ।
विहितशुचिपणायं[2] स्थानतो विप्रकृष्टं
सदपि सततमासीच् चेतसा संनिकृष्टम् ॥ ५ ॥

---

१—स्वपतिः धनपतिरित्यर्थः ।

२—पणाया व्यवहारः । कृतशुद्धव्यवहारमित्यर्थः ।

व्यलसदुदितवाराणस्यधीशोपि भूपः
सुकृतकृदनुरूपः कोपि धर्मस्वरूपः ।
अवृधदनिशमिष्टं साधु दानादि पुण्यं
न्यवृतदखिलकष्टं यं समाश्रित्य गुण्यम् ॥ ६ ॥

अथ गतवति काले दैवयोगात् कदाचिद्
विपदमुपगतोऽभूत् पीलियोऽसौ कुतश्चित् ।
प्रियमनशदशेषं तस्य सम्पत्तिजात
मुखकमलमपि द्राङ् म्लानतां सम्प्रयातम् ॥ ७ ॥

रजनिरजनि कष्टा द्रव्यनाशादनिष्टा
दिवसमसुखमिष्टा सा प्रतिष्ठापि नष्टा ।
हतविधिघटितत्वात् सकुचद्भागधेयः
प्रविततमनुतापं प्राप वाराणसेयः ॥ ८ ॥

उपनतविपदेष क्लान्तसम्भ्रान्तचित्तः
शिथिलबहुलशक्तिर्नष्टनिःशेषवित्तः ।
परिजनसमवेतोऽप्यर्थकष्टेन दीनः
पुरि न रतिमलब्ध श्रेष्ठिसौभाग्यहीनः ॥ ९ ॥

भृशमिदमचिचिन्तद् भाग्यवान् साधुचर्यः
प्रभवति मम मित्रं संघनामार्यवर्यः ।
अवगतमदवस्थः श्रेष्ठिवंशावतंसः
किमपि लघु करिष्यत्यत्र साहायकं सः ॥ १० ॥

इह विपदि मयाऽतस्तत्समीपे प्रयेयं
नियतमुदितकीर्त्या तेन वित्तं प्रदेयम् ।
विषमपतितमिष्टं प्रेक्ष्य सत्प्रीतिमन्तः
स्वजनमुपचरन्तः प्रोन्नयन्त्येव सन्तः ॥ ११ ॥

विलसति स धनाढ्यः शुद्धवाक्चित्तकायः
सपदि च भवितास्मिन् सङ्कटे मे सहायः ।
प्रणयवचनबद्धास्तादृशा लब्धरायः[1]
प्रियमिह न निराशं कुर्वते स्वं सखायः ॥ १२ ॥

इति स मनसिकृत्यैवाशु वाराणसीतः
सदयित[2] उपयातो राजगेहं प्रतीतः ।
समगत पुरि तत्र श्रेष्ठिना संघनाम्ना
परिचितचरमित्रेणोन्नतैश्वर्यधाम्ना ॥ १३ ॥

स्वसुहृदमवलोक्य श्रेष्ठिनं तं सदारं
सदकृत बहु संघोऽ[3]प्येतमारादुदारम् ।
पुलकिततनुरुच्चैः संपरिष्वज्य कण्ठे
प्रमुदितमनसोपावीविशच्चोपकण्ठे ॥ १४ ॥

प्रियमधुरवचोभिः प्रीणयन्नन्तरङ्ग
प्रकृतमथ कथायाः प्राववर्तत् प्रसंगम् ।
विशदमिदमगादीदस्तु ते स्वागतं भोः
फलतु हृदभिलाषोऽनुग्रहात् तस्य शम्भोः ॥ १५ ॥

कथय विगतशंकस्त्वं सखे ! किंनिमित्तं
मम सविधमुपागाः कीदृशं तेऽस्ति चित्तम् ।
किमिति च भवतेदं गेहमभ्यागतेन
मृदुपदकमलाभ्यां भूषितं सम्मतेन ॥ १६ ॥

---

१—प्राप्तधना इत्यर्थः । रै शब्दस्य लोकेपि प्रयोग एष्टव्यः ।

२—दयितया सहित इत्यर्थः ।

३—उपागतमित्यर्थः ।

श्रुतसखिवचनः श्रीपीलियस्त्वाबभाषे
विपदमधिगतोऽहं ह्यागम त्वत्सकाशे ।
सकलमपि विनष्टं द्रव्यजातं मदीयं
शरणमगतिकत्वात्त्वां प्रपन्नः सखेऽहम् ॥ १७ ॥

अनभिमतमकस्मादागता सा विपत्ति-
र्बलवदहमभूवं ध्वस्तचित्तप्रसत्तिः ।
अतिशयदयनीयां दुर्दशां मे विचार्य
त्वमुचितमपि कुर्या द्रव्यसाहाय्यमार्य ! ॥ १८ ॥

स्फुटमकपटमेतत् पीलियोक्तं निशम्य
त्वरितमकथि सङ्घेनापि मित्रं प्रणम्य ।
अयि सहृदय बन्धो ! सर्वथा मा स्म भैषीः
प्रियसुहृदहमस्मि प्रीतिकृत् ते हितैषी ॥ १९ ॥

गृहमिदमवगच्छ स्वस्थचित्तः स्वकीयं
रुचिकरमतिरम्यं मानुभूरन्यदीयम् ।
सुभगमहमवैमि प्रेयसो दर्शनं ते
जगति विहितपुण्या ह्येव मित्रं लभन्ते ॥ २० ॥

वचनमिदमुदीर्य प्रीतिमान् सत्यसन्धः
कृतसुहृदनुकम्पः स्फीतसौहार्दबन्धः ।
स्वयमनुपधि चत्वारिंशत वित्तकोटी-
र्व्यतरदयममुष्मै सद्य आपन्निमित्तम् ॥ २१ ॥

न खलु धनमशीतेरर्धमेवापि तेन
स्वमितरदपि सर्वं [1]साम्यदाय्युन्नतेन ।
वसनपशुहिरण्याद्यर्थमर्धं विधाय
तदभिमतमपेक्ष्यातोषि चासौ प्रदाय ॥ २२ ॥

---

१—सामि शब्दोऽर्धवचनः । स्वशब्दस्यात्र धनमर्थः ।

प्रियतरमपि दत्वा पीलियाय स्ववित्तं
समधिकविभवस्याखित्त नैवास्य चित्तम् ।
हृदि विकसदमन्दानन्दसन्दोह आसीत्
परिगतसुहृदिच्छापूर्तिरिष्टाऽचकासीत् ॥ २३ ॥

उपहृतनिजभृत्यस्त्यक्तकार्पण्यदोष :
सुखिनममुमकार्षीदेष उन्मुक्तकोषः ।
गुणिगणगणनीयः शान्त एकान्तसभ्यः
स्फुरदुपकृतिरिभ्यस्तादृशः क्वेह लभ्यः॥ २४ ॥

द्रविणमपि गृहीत्वा पीलियस्तत् समस्तं
निजभवनमयासीत् प्राप्तसम्पत्प्रशस्तम् ।
विविधमभिदधत्तं श्रेष्ठिन साधुवादं
शमितहृदवसाद लम्भितात्मप्रसादम् ॥ २५ ॥

नियतिकृतनियोगादेकदा सङ्घनामा-
प्यभवदतिविपन्नः क्षीणसम्पन्निधानः ।
स हि [1]धनिकचरः सन्नर्थदारिद्र्यमाप्तः
प्रबलविधिविधानं को नरो रोद्धुमीशः ॥ २६ ॥

विपुलविभवराशेराशु नाशाद् दरिद्रः
समजनि स तदानी चिन्तया वीतनिद्रः ।
न च परमुपकर्तु वित्तहीनः शशाक
बलवति सति दैवे पूरुषः को वराकः ॥ २७ ॥

स्मृतधनवदशेषस्वीयसन्मित्रसङ्घः
सपदि विपदि मग्नश्चिन्तयामास सङ्घः ।
किमिति न धनवन्तं प्राप्नुयां पीलियं तं
शरणमशरणोऽहं श्रेष्ठिनं प्रीतिमन्तम् ॥ २८ ॥

---

१–भूतपूर्वं चरट् ।

धनमुपकृतपूर्वः स प्रदास्यत्यवश्यं
परिचरणसमर्थश्चित्तमुल्लास्य वश्यम् ।
मदुपहृतपदार्थाः कोटिशस्तस्य सन्ति
न च कृतमुपकारं बन्धवो विस्मरन्ति ॥ २६ ॥

उचितमिति विचार्य द्राक् स गन्तुं प्रवृत्तः
सदनमधनवत्त्वात् सख्युरत्युच्चवृत्तः ।
अनधिगतसहायो याचकत्व प्रपन्नः
स्मरति सुहृदमर्थी ह्यर्थवन्तं विपन्नः ॥ ३० ॥

अभवदमितवित्तं यः परस्मै प्रदाता
भवति स परकीयं गेहमद्य प्रयाता ।
बत विधिमहिमाऽयं नूनमास्ते दुरापः
प्रतिपदमुपकर्तैवोपकार्यत्वमाप ॥ ३१ ॥

कृतमतिरथ पद्भ्यां यान् स्वगेहात् सभार्यः
पदमनुपदमापत् पीलियस्याञ्जसार्यः ।
अनुचितमिव मेने स्वां प्रियां लब्धमानां
नगरमभिपतन्तीं वीक्ष्य सोऽप्राप्तयानाम् ॥ ३२ ॥

अत उदितविवेकः प्रेयसी धर्मशाले
क्वचिदपि स निवेश्याश्वास्य चेष्टे विशाले ।
विहितवसतिमाराद् वेश्मनि प्रोच्चशाले
सविनयमुपतस्थे मित्रमह्नाय काले ॥ ३३ ॥

परमिदमतिचित्रं वीक्ष्य लब्धोपकारः
किमपि न सुहृदस्य स्वागतं व्याजहार ।
न च समुदमुदस्थान्नैव वाभ्युज्जगाम
गलितविभवमेनं प्राप्तमप्यात्मधाम ॥ ३४ ॥

अहह विधिविपाको दृश्यतां यद् गुणज्ञः
स्थिरसुहृदपि जातः पीलियः सोऽकृतज्ञः ।
उपकृतिमपि पूर्वां तत्कृतामेष नूनं
प्रकटितशठभावो विस्मृतोऽभूदनूनम् ॥ ३५ ॥

अनवहितमपृच्छत् स स्थितं सच्चरित्र
किमिति मम समीपेऽत्रागतोसीति मित्रम् ।
अकथयदथ सङ्गस्त्वां दिदृक्षुः समागां
स्मृतिमुपदधदन्तस्ते निबद्धानुरागाम् ॥ ३६ ॥

इह वसतिरकारि क्व त्वयैत्येति[1] पृष्टः
पुनरवगतचित्तः प्राह सङ्गोऽप्यहृष्टः ।
अहमकृतनिवासस्त्वामुपेतः स्वदेशात्
क्वचिदपि निजभार्यां धर्मशाले निवेश्य ॥ ३७ ॥

तदभिहितमवेत्य त्यक्तसन्मित्रकार्यः
कुटिलमतिरवादीत् पीलियोऽसावनार्यः ।
पदमितरदुपेहि, त्वत्कृते स्थानमत्र
न भवति मम गेहे श्रूयतामङ्ग मित्र ! ॥ ३८ ॥

अभिदधदनपेक्ष कष्टमेतद् वचः स्वं
प्रणयिनमपि सङ्गं नानुजग्राह निःस्वम् ।
प्रचुरधनसमेतोऽप्येष नाज्ञास्त कृत्य
सकपटहृदयत्वादादिशच्चात्मभृत्यम् ॥ ३९ ॥

अयि शृणु निकटस्थं तत् पुरो वेश्म गत्वा
लघु महदपि किञ्चिद् देयमेवेति मत्वा ।
प्रवितर बुसमस्मै सम्यगालोक्य तुम्बी-
परिमितमिह दूरादागतोऽयं कुटुम्बी ॥ ४० ॥

---

१-त्वया एत्य इति च्छेदः ।

न खलु कथयतैवं तेन किञ्चिल्ललज्जे
महति तु कृपणत्वात् पापपङ्के ममज्जे ।
अघटितमघटीदं पीलियेनातिमात्रं
प्रियसुहृदहितेनोपैक्षि यत् प्रीतिपात्रम् ।। ४१ ।।

जडमतिरयमेतं[1] तं कडङ्गर्यमर्थं
पशुमिव सदकार्षीत् पीलियः साधुचर्यम् ।
क्षणमपि न विचारं मित्रताया वितेने
कृतबृहदुपकारं चापि तं नैव मेने ।। ४२ ।।

स हि शकटसहस्रेणाबिभः षष्टिकानां
भवनमभिनवानामह्नि तत्रागतानाम् ।
धनममितमतोऽभूत् तस्य पार्श्वे प्रदेयं
परमवमतबन्धोः सर्वमेवास्त हेयम् ।। ४३ ।।

स्वयमयमुपलभ्याशीतिकोट्यर्धमर्थं
त्यजति निजसहायं सङ्घमद्यासमर्थम् ।
कथमिव स कृतघ्नस्तस्करः स्यात् प्रशस्यः
क्व च भवतु कदर्यस्तादृशो वा यशस्यः ।। ४४ ।।

उपगतवति तुम्बीपात्रमापूर्य दासे
बुसमनभिमतं तद् दातुमेतत्सकाशे ।
स्थिरमतिरपि सङ्घोऽचिन्तयन्नष्टमानः
प्रकटमिदमिदानीमाददीयाथवा न ।। ४६ ।।

---

१—आगतमित्यर्थः

सुहृदिति बहु कोट्या सत्कृतोऽप्य मया तु
वितरति स बुसं मे, सख्यमेतन्न जातु ।
ननु कथमकृतज्ञस्यास्यमस्याति[1] भातु
निरुपधिसखिभावश्चाश्रय क्व प्रयातु ।। ४६ ।।

कृतमयमुपकारं मङ्क्षु हन्तीति मन्ये
परधनमुषि चास्मिन् का शुभाशास्त्यधन्ये ।
स्फुटकपटमनेनात्याजि सन्मित्रधर्मः
सुमतिविरहितेनाज्ञायि नाचारमर्म ।। ४७ ।।

यदि बुसमहमेतन्नाददीयैतदीयं
झटिति विघटयेयं मैत्र्यमत्र स्वकीयम् ।
अत उचितमिदं मे, स्वीकरोम्यस्य वस्तु
यदपि लघु, तथाप्यव्याहतं सख्यमस्तु ।। ४८ ।।

विरहयतु मुधाय बुद्धिहीनः सुहृत्त्वं
न कथमनुभवेयं साध्वहं तन्महत्त्वम् ।
प्रकटयतु च कामं वित्तमत्तो लघुत्वं
कथमहमभिरामं संत्यजेयं गुरुत्वम् ।। ४९ ।।

निजमनसि स संघः सम्प्रधार्येत्थमार्यः
सपदि बुसमगृह्णादुच्चसौहार्दहार्यः ।
न च कमपि विकारं प्राप लब्ध्वा निकारं
शुचिसरलविचारं चिन्तयन्नत्र सारम् ।। ५० ।।

लघुबुसमथ लब्ध्वा पीलियं चापि नत्वा
समगत च स पत्न्या धर्मशाले हि गत्वा ।
अवददखिलवृत्तं भार्यया पृच्छ्यमानः
प्रकटितबुसदानो लब्धभूयोपमानः ।। ५१ ।।

---

१—आस्यं वक्त्रमित्यर्थः

अधिगततदुदन्ता प्रेयसी साधुवृत्ता
व्यथितमृदुलचित्ता रोदितुं सा प्रवृत्ता ।
प्रियमुदितवती हा ! किं गृहीतं त्वयादः
किमिति न परिवृक्तं, हन्त भूयान् प्रमादः ॥ ५२ ॥

तमहमतिनिकृष्टं पीलियं दुश्चरित्रं
कृपणशठमनिष्टं नाभिनन्दामि मित्रम् ।
प्रददति यदवाप्ताशीतिकोट्यर्धरायः
फलमिदमतितुच्छं तादृशाः किसखायः ॥ ५३ ॥

महदिदमपराद्धं यत् त्वयाऽकारि तस्य
बहुलमुपकृतिः सा पूर्वमभ्यागतस्य ।
झटिति कथममुष्या विस्मृतिस्तेन तेने
लघुतरबुसदानात् यद्भवांश्चावमेने ॥ ५४ ॥

बहुविधमिति वाच्य भाषमाणां स्वकान्तां
व्यतनुत रुदती स प्रीतिवाक्यैः प्रशान्ताम् ।
शशिमुखि ! दयिते ! मे मा रुदो, रोदनेन
न भवति फलसिद्धिर्या तवेष्टा धनेन ॥ ५५ ॥

सुखकरमिह वेद्यं मित्रमेवार्थतत्त्व
परमतिमतिहीनो वेद नादो महत्त्वम्[1] ।
अहमनुपधि सख्य मा स्म भाजि [2] स्वकीयं
बुसमिदमिति बुद्ध्यैवाग्रहीषं तदीयम् । ५६ ॥

---

१—अदोमहत्वं सुहृत्त्वमहत्त्वमित्यर्थः ।
२—भञ्जे रूपम् ।

सुहृदमसुलभं हि प्रायशोऽहं विलोके
स तु हतमतिरेतन्नैव जानाति लोके ।
विधिवदवधिहीनं स्वःसुखं ते लभन्ते
मृदुऋजुहृदय ये मित्रमत्राश्रयन्ते ॥ ५७ ॥

यदिदमजनि दैवात् तत्र मे नास्ति दोषः
स्वहृदयनिहितोऽयं त्यज्यतामाशु रोषः ।
विदधति न विषादं स्वीयकृत्यं स्मरन्तः
प्रबलमपरहेतोः क्लेशमाप्त्वापि सन्तः ॥ ५८ ॥

उपदिशति तदैवं स्वप्रियां तत्र सङ्घे
ललितमधुरभार्ये सद्गुणैर्दुर्विलङ्घे ।
अनभिहितमुपागात् कोऽप्यटन् सद्विवेकः
स्वयमुपहृतपूर्वं पीलियप्रेष्य एकः ॥ ५६ ॥

रुदितमुदितमाराद् गच्छताऽऽकर्णि तेन
द्वयमपि च तदानीमैक्षि शालागतेन ।
अतिपरिचितपूर्वं सद्भमिभ्यं सदार
चिरतरमुपलभ्यानम्य[1] चारोद्युदारम्[2] ॥ ६० ॥

स्मृतिपथमुपनीय स्वामिनः सत्स्वभावं
सुविहितवरिवस्यं चात्मनो भृत्यभावम् ।
कृतचरणनिपातः प्राह सङ्घं विनीतः
स्थितमवसितवित्तं धर्मशालेऽविगीतः ॥ ६१ ॥

---

१—प्रणम्येत्यर्थः

२—अरोदि रुदितम् । उदारमिति क्रियाविशेषणमपि ।

प्रभुवर ! महनीय ! प्राज्यसत्कीर्तिधामन्
पदमिदमुपयातः किंकृतस्त्वं सुनामन् ।
न हि विलसति शोभा तेऽद्य वक्त्रारविन्दे
शिथिलवसुमिवाह त्वां विपन्न नु विन्दे ॥ ६२ ॥

वदतु वदतु सद्यः किंनिमित्ता विपत्ति-
र्भवति समुदपादि ध्वंसितान्तः प्रसत्तिः ।
स्वभवनमभिनन्द्य येन सत्यज्य वन्द्य
परसदनमुपागाद् द्राग् भवानद्य निःद्यम् ॥ ६३ ॥

अभिहितवति तस्मिन् योग्यताभाजि भृत्ये
विकलहृदयमेव साधुविज्ञातकृत्ये ।
स सकलमपि वृत्तं स्वीयमावेदयत् त
स्फुटमवहितचित्त स्वामिसेवाऽप्रमत्तम् ॥ ६४ ॥

तरलसरलचेता ज्ञाततत्कष्टवार्तः
स गरलमिव पीत्वाभूत्तदात्यन्तमार्तः ।
अचकथदथ सङ्घ त्व प्रतीक्षस्व कंचित्
समयमयमय[1] भो ! मा चिचिन्तः कथञ्चित् ॥ ६५ ॥

तव किमपि करिष्ये द्राक् प्रभो ! सविधान
बहु भवदवदान[2] वेद्मि सम्प्राप्तभानम् ।
यदपि भगवताहं पीलिथाय प्रदत्त-
स्तदपि सततमस्मि त्वय्युपारक्तचितः ॥ ६६ ॥

---

१—शुभदैवयुक्तमित्यर्थः ।
२—अवदानं कर्म वृत्तम् ।

सविनयमिदमुक्त्वा स प्रियं सङ्घमार्यं
तदुचितमुपकारं चापि मत्वाऽनिवार्यम् ।
स्वगृहममुमनैषीत् सम्यगाश्वास्य हृद्य
सति धनरहितत्वेऽप्युच्चसेवानवद्यम् ।। ६७ ।।

अधिगृहमुपनीय श्रेष्ठिन प्रीतिपात्र
व्यधित सुरभिवारा स्नाननिर्णिक्तगात्रम् ।
सरसमधुरभोज्यं भोजयामास भूय·
प्रमदमनुपद तत्सेवया सोऽनुभूय ।। ६८ ।।

विधिविहितसपर्य· पर्यगादर्यवर्य
विविधचटुलवाग्भि. प्रीणयन् पुण्यचर्यम् ।
पुनरथ बहिरित्वा स्वान् सखीनन्यभृत्यान्
प्रियमिदमसुसूचत् पीलियाधीनभृत्यान्[1] ।। ६९ ।।

श्रृणुत मम सखायो न· प्रभुः सङ्घ इभ्य·
शुभचरित इदानीमागतोऽस्त्यत्र सभ्यः ।
चलत मिलत सेवां मद्गृहेऽवस्थितस्य
तनुत सदयितस्यामुष्य कष्टाश्रितस्य ।। ७० ।।

गिरमतिमधुरां तां ते समाकर्ण्य भृत्याः
प्रभुममुमुपजग्मुस्त्यक्तसर्वान्यकृत्याः ।
समजनिषत नूनं तद्वियोगावसन्ना
अपि सुखदतदीयालोकनेन प्रसन्नाः ।। ७१ ।।

स्वधनिकमनिकेत सर्वथाऽर्थादपेत
परनगरमुपेत वीक्ष्य भार्यासमेतम् ।
मनसि सकलदासाश्चिन्तयामासुरेव
कथमपि विषमस्थं प्रोद्धरामात्र देवम् ।। ७२ ।।

---

१·—भृत्या भृतिः जीविकेत्यर्थः ।

समुदित इह यत्नस्तादृशः कोपि कार्यः
        प्रभवतु सहभार्यः कोऽप्यधीशोऽयमार्यः ।
रुचिररुचिरधीष्टः प्रागिवाढ्यम्भविष्णु.
        पुनरपि निजधामालङ्करिष्णुश्चरिष्णुः ।। ७३ ।।

विहितमधमकृत्यं पीलियेनास्य सख्या
        व्यघटि चिरमभिख्या सौहृदय्यस्य मुख्या ।
भवति स शठबुद्धिर्दण्डनीयो विमृश्यः
        क्वचिदपि निजमित्रद्रोहकृन्नैव मृष्यः ।। ७४ ।।

सुदृढमिति विचिन्त्य प्रैष्यवर्गेण तेन
        विमलचरितमिभ्यं सङ्घमभ्यानतेन ।
सरभसमभिजग्मे स्वस्य राज्ञः समीप
        व्यरचि विकृतमुच्चैः क्रन्दनञ्च प्रतीपम् ।। ७५ ।।

विततमतिमहान्तं भृत्यकोलाहल सः
        प्रकृतिहितकृदाराच्छुश्रुवान् राजहसः ।
जनगणमथ दृष्ट्वा पृष्टवान् किंनिमित्तं
        कुरुथ रवमतीव क्लिश्यते येन चित्तम् ।। ७६ ।।

अवितथमितिवृत्तं तत्र भृत्यैर्न्यवेदि
        यदभवदतिमात्रं शृण्वता चित्तखेदि ।
नरपतिरपि साक्षाददद्भुत तन्निशम्य
        स चकितमवतस्थे सर्वलोकाभिगम्यः ।। ७७ ।।

स विशदमनुयोक्तुं न्यायवित् सत्प्रभावः
        सदसि सपदि सङ्घं पीलियं चाजुहाव ।
कृतनिजपुरवासौ यावभूतां विनीतौ
        बृहदवधि मिथः सन्मित्रभूतौ प्रतीतौ ।। ७८ ।।

शुचिसचिवसमेतो विष्टरे चोपविष्टः
प्रथममुपगत त प्राह सङ्घ स शिष्टः ।
अपि कथयतु चत्वारिशतं पीलियाय
व्यतरदुपयतेऽस्मै[1] कि भवान् द्युम्नकोटीः ॥ ७९ ॥

प्रतिवचनमवोचत् सङ्घ एव नरेश
समुपहितविशेषं त्यक्तमिथ्यार्थलेशम् ।
शृणु नृप ! सुहृदागादेष मे सन्निवेशं
द्रविणमुचितमीप्सुः स्व परित्यज्य देशम् ॥ ८० ॥

च्युतधनमसहायं सूचितार्थाभिलाष
कथमुपनतमेनं हन्त कुर्या निराशम् ।
इति झटिति वितीर्याशीति कोट्यर्धमर्थ
मुदितमहमकार्ष सभ्यमिभ्य समर्थम् ॥ ८१ ॥

न खलु वसु तदेवायच्छमस्मै स्वमर्ध
स्वमितरदपि सर्व साम्यदामस्तगर्धम्[2] ।
मयि निहितमनस्को बान्धवो मा वृथा गात्
मतिरियमिदमर्थैवात्मनीना[3] मुदाऽभात् ॥ ८२ ॥

क्षितिपतिरविगीतां श्रेष्ठिसङ्घोक्तिमेतां
श्रुतिपथमुपनीय श्लाघ्ययुक्त्या समेताम् ।
स्थितमपि च समक्ष पीलियं पर्यपृच्छत्
किमिदमवितथं भोः ! यद् भवान् वित्तमार्च्छत् ॥ ८३

---

१—उपगच्छते, त्वां प्राप्तवते इतियावत् ।

२—लोभरहितमित्यर्थः । अत्र स्वशब्दस्य एकत्र धनमर्थः ।अपरत्र चात्मीय इति

३- अयमर्थो यस्याः सा इदमर्था ।

अनुपदममृषोद्यं पीलियेनाबभाषे
ध्रुवमहमुपयातः पूर्वमेतत्सकाशे ।
सति मयि धनराशेराशु नाशान्निराशे
मम विपदमुनोक्तद्रव्यदानान्निरासे ॥ ८४ ॥

पुनरवनिपतिस्तं पृष्टवान् ब्रूहि सत्यं
त्वमपि सदकृथाः किं प्रेक्ष्य सङ्घ सुकृत्यम् ।
विहितसदुपकार त्वन्निकेत समेत
निजमशरणमेत बन्धुमर्थादपेतम् ॥ ८५ ॥

इति तु वचनमाकर्ण्योत्तर न प्रपेदे
मलिनमजनि वक्त्र, चेतसा न प्रसेदे ।
अनवहितपरार्थाः [1]स्वार्थमेवाश्रयन्तः
कथमिह न सशोका लज्जिता. सन्त्वसन्तः ॥ ८६ ॥

नृपतिरथ पुनस्त ह्यन्यदप्यन्वयुक्त
विदिततदभिसन्धिस्तत्प्रसगप्रयुक्तः ।
सुहृदपचितिकृत्ये किं त्वयैवं प्रमत्त
ननु बुसमपि तुम्बीपात्रमात्र प्रदत्तम् ॥ ८७ ॥

इदमपि स निशम्यावास्थितावाङ्मुखस्तु
न च किमपि जगाद प्राप्तकालार्थवस्तु ।
हृदयनिहितशोकान् मन्दधीः पीतिमानं
परमभजत तत्र स्वार्थिकश्चापमानम् ॥ ८८ ॥

---

१.—तृतीयैकवचने रूपम् । अवाङ्मुखेनेत्यर्थः । अवाञ्च् शब्दोऽयम् ।

व्यरचि मलिनमास्यं, नैव चाऽवाचि वाचा
स्थितमधिगतकष्ट चोदितेनाप्यवाचा[१] ।
हतसुहृदुदयेन स्वार्थससाधकेन
प्रकटितमशुचित्वं दुर्विनीतेन तेन ।। ८९ ।।

अमुमुपगतमौन वीक्ष्य राजा स्वमिष्ट
सचिवगणमपृच्छद् बुद्धिमन्त विशिष्टम् ।
वदत विशदमार्याः साम्प्रत किं विधेय
दमनमुचितमस्मिन्सापराधे प्रणेयम् ।। ९० ।।

अधिकृतमनुयुक्तैर्मन्त्रिभिस्तैरगादि
प्रिय ! सहृदय ! राजन् ! का समस्योदपादि ।
प्रकटमयमिदानी दण्डनीय. प्रदिष्ट
प्रभवति न कृतागाः क्वापि कस्याप्यभीष्टः :। ९१ ।।

स्वयमभिमतवित्त बान्धवात् स्वाद् गृहीत्वा
चिरतरमुपभुज्यानेहस चापि नीत्वा ।
तदनुगुणमदानं, नास्ति सन्मित्रधर्मः
क्वचिदपि न च विज्ञैरुच्यते पुण्यकर्म ।। ९२ ।।

वचनमिति निगद्याभ्यर्हितं मन्त्रिणस्ते
बहु सदसि निनिन्दुस्तं स्वकर्मण्यशस्ते ।
अवनिपतिरपीष्टं निर्णयं स्वं चकार
तदनु दृढनिदेशं धर्मविद् व्याजहार ।। ९३ ।।

द्रुतमित इत भृत्याः ! पीलियश्रेष्ठिनः स्वं
सकलमपि गृहीत्वा तं च कृत्वाशु निःस्वम् ।
गुणगणरमणीयश्रेष्ठि संघस्य गेहे
कृतयशसि निधत्त प्रेयसो राजगेहे ।। ९४ ।।

ददतमिति निदेशं पुण्यकर्मा स भूपं
जनपरिषदि सङ्घः प्रोक्तवान् मित्ररूपम्[1] ।
नृप ! लघुमपि रायं कामये नान्यदीय
यदहमलमदां तद् दापय त्व मदीयम् ।। ९५ ।।

नहि मम परकीये स्वापतेयेऽभिलापः
फलति बहुललोभात् सर्वथेह प्रणाशः ।
उदितसतत दीव्यन् मा गृधो वाक् प्रकाशः
अपि निबिडतमस्थ. स्यामह लुब्धपाश ।। ९६ ।।

त्वमसि बहु दयालुर्मा हि राजीचिकीर्षु.[2]
परमहमिदमीयं नास्मि वस्वाजिहीर्षः ।
अयमपि मम बन्धुः पीलियः प्राप्तमुद्रः
स्थिरसुखमनुभूयाद् देव ! मा भूद् दरिद्रः ।। ९७ ।।

इतिसमुदमुदारां वाचमाचम्य राजा
समतुषदमुनासौ श्रेष्ठिना पुण्यभाजा ।
स्तुतिवचनमशंसीद् गद्गदीभूय भूपः
तदुदितधनदानं चादिदेशाकपूयः[3] ।। ९८ ।।

(स्वागतावृत्तम्)

दीयमानमपि नाधिकमैच्छद्
योऽर्थिने खलु यथेच्छमयच्छत् ।
ईदृशः शुभदृशः सुचरित्रं
मैत्र्यमत्र विदधाति पवित्रम् ।। ९९ ।।

---

१—प्रथमैकवचने रूपम् । प्रशस्तं मित्रं मित्ररूपं संघः इत्यर्थः ।

२—अराजानं राजानं कर्तुमिच्छुरित्यर्थे च्विः ।

३—अकुत्सित इत्यर्थः ।

पीलियेन यदशीलमशीलि
तत्र येन नयन सममीलि ।
दुर्धियः समुदलङ्घ्य च रहः
सोऽनिशं जगति दीव्यतु सङ्घ ।। १०० ।।

भूभृद्दापितमुत्तम स मतिमानादाय कोटीर्धनं
चत्वारशतमात्मनः पुरमगात् प्रत्तस्वभृत्यादिभाक् ।
गत्वा तत्र सुखेन कालमनयत् सम्पत्तिमान् पूर्ववद्
धन्यः स्त्रीसहित प्रकाममहितः सङ्घः मतामग्रणीः ।।१०१।।

मित्रस्येदमुदाहृत व्यवहृतौ सल्लक्षण दृश्यतां
दृष्ट्वा चाप्यनुमन्यतामनुपदं श्रद्धास्पदं तत् सताम ।
येनामानि न मानवेन महता हानि स्वय सम्पदा
सोऽयं स्वाश्रितमित्रमत्र जयति श्रीसङ्घनामा पुमान् ।।१०२।।

योऽसौ स्वार्थपरायणो ह्यविनय श्रीपीलियः शीलयन्
सन्मित्रेण सम शठ व्यवहरन्नासीदधन्यस्तु स. ।
स्निग्धः सङ्घसमः समः समर्यावन्नित्यं भवेत् प्रीतिमान्
त्यक्तस्वार्थसुखः सखेति कथयत्येषा कथेह स्फुटम् ।। १०३।।

नि.स्वार्थदृढसन्धिबन्धरुचिरं चेतो दधत् सुस्थिरं
यत् साक्षादुपकारि हारिचरित मित्रं विदुः सज्जनाः ।
दृश्य तद् विशदं परार्थघटनादस्यां कथायां मुदा
प्रोक्तार्तोपकृतिः कृता सुकृतिभिः शस्या यशस्यापि च ।।१०४।।

श्रीबुद्धो भगवान् विशुद्धहृदयः सङ्घाख्यया विश्रुतः
स्पष्टं सूचयति स्वयं सुविदितं सन्मित्रधर्म शुभम् ।
तस्मादिष्टजनोपकारनिरतं सम्यक् पवित्राशयं
लब्ध्वा मित्रमनुत्तमं भुवि सदा नन्दन्तु सर्वे जनाः ।। १०५ ।।

# एकादशः सर्गः

(शार्दूलविक्रीडितवृत्तम्)

आसीत् तक्षशिलापुरे सुविदिते प्रेक्षावतामग्रणीः
श्रीबुद्धो भगवान् कदाचन पुरा भूयः प्रसिद्धिं गतः ।
आम्नाती विविधागमेष्वतितरामुच्चैः सदाचारवान्
आचार्यत्वमुपेयिवान् विनयिनश्छात्रान् स्वयं शिक्षयन् ॥ १ ॥

नित्यं पञ्च शतान्युदारहृदयो विद्यार्थिनोऽध्यापिपत्
साध्वाचारविचारसात्कृतमसावुच्चावच वाङ्मयम् ।
सच्छात्रः समय नयन् रसमय सच्छास्त्रवित् सन्मतिः
संदीप्तः शुशुभे शुभयुरभितः श्रेयोंशुभिः प्रांशुभिः ॥ २ ॥

एकः पापकनामक सरलधीस्तच्छिष्यवर्गेष्वभूत्
सर्वे पापक पापकेति बटवो नाम्नाह्वयन्ति स्म यम् ।
खिन्नस्तच्छ्रवणादचिन्तयदसौ क्लेशावहं प्रत्यह
मन्नामेदममङ्गलास्पदमतस्त्याज्यं मया द्रागिति ॥ ३ ॥

पापस्य ध्वनिरेव तावदशुभो मन्नामनि श्रूयते
व्रीडादाय्ययशस्करः प्रतिपदं दुःखाकरो दुःश्रवः ।
तस्मात् तत् परिवर्तनीयमुचित नामान्तरं चेष्यता-
मित्यालोच्य गतस्ततः सपदि स श्रीबुद्धदेवान्तिकम् ॥ ४ ॥

आचार्यस्य समीपमेत्य विनयादूचे वच सादरं
श्रीमन् ! पापकनाम दुःश्रवमिदं नाहं हृदा रोचये ।
सद्यस्तत् परिवर्त्य किञ्चिदपरं रुच्यं शुभ सुन्दर
त्व पुण्यं कुरु साधु नामकरणं सन्मङ्गलाशंसि मे ॥ ५ ॥

तच्छिष्यस्य वचो निशम्य भगवान् बुद्धो विशुद्धोदयः
प्रीत्या बोधयितुं तमेवमवदत् प्रेयन् ! मुधा मा[1] तमः ।
नाम्नो नास्ति महत्त्वमत्र भुवने कर्मैव मुख्यं मतं
किं नाम्ना, यदि सद्गुणास्त्वयि परां शोभां स्फुटं बिभ्रति ॥ ६ ॥

आह्वानाय यदृच्छया विहितयानन्वर्थया सञ्ज्ञया
निर्देशः क्रियते जनस्य, न भवत्युच्चत्वमेनावता ।
नार्थः सिध्यति कश्चनाप्यभिमतो भद्र स्वय नामन
स्युर्नामानुगुणा गुणा इह नृणामेतद्ध्यनैकान्तिकम् ॥ ७ ॥

निन्द्यं नाम सदप्यनिन्द्यचरिते पुंसि प्रशस्यं भवेद्
दुर्वृत्तेऽर्हति गर्हणं शुभमपि प्रायस्तदेवेक्ष्यताम् ।
सत्कर्मप्रवणो भव त्वमनिशं नाम्न्येव मात्याहृथाश्
चिन्तां मा स्म कृथा वृथा शुभपथान्मा भूश्च्युतः कर्हिचित् ॥ ८ ॥

संकेतस्तव पापकेत्यभिधया याहच्छिकोऽभूदयं
किञ्चित् तेन न दुष्यतीत्यनुभव व्यर्थं कुतः खिद्यसे ।
सारं ग्राह्यमपास्य फल्गु सकलं नामादिदृश्यं जगद्
विज्ञेयं क्षणभङ्गुरं प्रिय बटो ! शुद्धं स्वरूपं स्मर ॥ ९ ॥

इत्येवं बहु बोधितोऽपि गुरुणा सद्युक्तिभिः पापकः
शान्तिं नाधिजगाम नामकरणे स्वं चाग्रहं नाजहात् ।
श्रीबुद्धेन तदोक्तमच्छमतिना स्वीयेच्छया गच्छ भो
नामान्विच्छ महेच्छ वाञ्छितमटन्नन्यत्र देशान्तरे ॥ १० ॥

तुभ्यं मञ्जुलमुत्तमं प्रियतरं यन्नाम रोचिष्यते
चित्ताह्लादि तदेव तेऽतिमुदितः कर्तास्म्यहं निश्चितम् ।
शङ्कापङ्ककलङ्कितोऽत्र विषये त्वं चेतसा मा स्म भू-
र्देशाद्देशमटंस्त्वमीप्सिततमामन्वेषयाख्यां शुभाम् ॥ ११ ॥

---

१—तान्तो मा भूरिति भावः ।

श्रुत्वैव वचन गुरो. सविनय श्रद्धायुतोऽसौ बटु-
　स्तत्पादावभिवाद्य हृद्यचरितो यात्रोद्यतः खल्वभूत् ।
आदायाश्रमतः स्वकान्निरगमत् पाथेयमत्युन्मना
　ग्रामाद् ग्राममितस्ततः प्रविचरन् प्रापत् पुर किञ्चन ।। १२ ।।

दैवाज्जीवकसञ्ज्ञकोऽमृत पुरे तस्मिंस्तदानीं पुमान्
　दाहाय स्म नयन्ति य पितृवन भ्रात्रादयो बान्धवाः ।
तं दृष्ट्वैष समागतः स्वयमिद पप्रच्छ लोकानये !
　किंनामाऽयमभूज्जनः कथयत प्राणान्तमाप्तो हि यः ।। १३ ।।

तत्रस्थैर्मनुजैरभाणि शृणु भो ! प्राणात्यय प्राप्तवान्
　आसीज्जीवकसञ्ज्ञयाऽत्र नगरे ख्याति गतोऽय पुमान् ।
जीव्यादित्यभिलाषतोऽस्य विहिता संज्ञा शुभा बन्धुभि-
　र्दैव त्वप्रतिरोध्यमित्ययमभूद् हन्त प्रमुक्तोऽसुभिः ।। १४ ।।

तच्छ्रुत्वा स उवाच जीवक इति ख्यातः कथं मृत्युमैत्
　वुन्नाशिष्यनुशिष्यते भगवता धन्येन दाक्षीभुवा ।
यद् व्युत्पत्तिनिमित्तमत्र जगति प्रख्यायते वस्तुनः
　किं नोत्पत्तिनिमित्तताविषयिणी कोटि तदाटीकताम्[1] ? ।। १५ ।।

ते प्रोचुर्न विचारचारु वचन प्रोक्त त्वया माणव !
　व्यर्थ नाम, यतो न तद्व्युपगतं मृत्यु निरोद्धुं क्षमम् ।
नाशिष्येव वुना च जीवकपदं व्युत्पाद्यतां, कुत्सिते
　कन्यप्यस्ति सुसाध्वहो भगवतः सूक्ष्मा मतिः पाणिनेः ।। १६ ।।

---

१—जीवक शब्दे जीव्यात् इति व्युत्पत्तिनिमित्तम् । तेन मृतः सन्नपि स जीवित एवोत्पद्येतेति भावः । न कदापि म्रियतामिति यावत् ।

व्युत्पन्नोपि विपद्यते विधिवशान् मृत्युर्ध्रुवः प्राणिनां
सर्वं वस्तु सदप्यसन्निगदित ध्रौव्यव्ययोत्पादवत् ।
किं नामात्र करिष्यति क्षणमपि स्याज्जीवकोऽजीवको
वेत्येवं न विचारणा प्रभवति क्षीणे सति ह्यायुषि ॥ १७ ॥

मन्दः पश्यसि नाम केवलमिह त्व नार्थतत्त्व पुनर्
भो ! नामाभिनिवेश एष भवता दूर समुत्सार्यताम् ।
उत्पन्नस्य मृतिर्ध्रुवा त्रिभुवने नाम्ना न सा वार्यते
विख्यातः खलु जीवकोऽप्युपरतः स्पष्ट पुर. प्रेक्ष्यताम् ॥ १८ ॥

आकर्ण्यैवमसावुदासित इव स्व नामधेयं प्रति
प्रागन्यत्र पुरे ततः प्रचलितो नामान्तरप्रेप्सया ।
तत्रापश्यदुपेत्य दीनवदनां स्वस्वामिपार्श्वस्थितां
दासी काञ्चन रज्जुभिर्दृढतरां सताड्यमानां मुहु. ॥ १९ ॥

सा सम्प्राप्य निजां भृतिं समुचितां कार्य स्वभर्त्रोदितं
सम्यक् कर्तुमितापि नाशकदतो दण्ड्या तदानीमभूत् ।
नाम्नासीद् धनपालिका परमहो दारिद्र्यमूर्तिः परा
तस्मिन्नेव पुरे चिराद् भृतिकरी वश्या भुजिष्या स्थिता ॥ २० ॥

दृष्ट्वा पापक एष तामतितमां संक्लिश्यमानां पुरः
पप्रच्छान्तिकसस्थितं जनगण तत्ताडनाकारणम् ।
तैरुक्त निजभर्तृचोदितमिय कार्य न साध्वाचरत्
तस्मादर्हति दण्डमप्रतिहत व्यक्तापराधा सती ॥ २१ ॥

किनाम्नीयमुदीर्यतामिति पुनः पृच्छत्यमुष्मिन् बटौ
प्रोक्त तैर्धनपालिकेति विदित साश्चर्यमित्याह सः ।
नाम्नैषा धनपालिका यदि, ततो दीना दरिद्रा कथम् ?
भृत्याकृत्यनुसारिणी प्रकटयत्याख्यामपार्था निजाम् ॥ २२ ॥

लोकेऽस्मिन् धनपालकः स कथितो यः स्वं धनं पालयेत्
स्वाम्यर्थस्य धनाढ्य एव पुरुषो नाम्नामुना युज्यते ।
यद्येषा धनपालिकेत्यभिहिता, युक्ता धनस्वामिनी
नत्वेवं भृतिमात्रमत्र दधती मुख्यामभिख्यां भजेत् ।। २३ ।।

इत्येव तमुदीरयन्तमवदंस्तत्र स्थितास्ते जना
भ्रान्तस्त्वं धनपालिकेत्यभिधयैवेभ्यामिमां मन्यसे ।
संज्ञैषा ननु लौकिकी, व्यवहृते. सम्पादनायेष्यते
दासीयं तु दरिद्रिता, न धनवत्येतावता जायते ।। २४ ।।

निःस्वा स्याद् धनपालिकापि कथिता कष्टाश्रिता चार्थिनी
विज्ञेया धनपालिकापि च तथा, नाम्नात्र किं सिध्यति ।
तद्व्यक्तिप्रतिपत्तये भवति भो नामप्रयोगो जने
यत्तन्नाम विधीयतां, मतिमतां नातीव नाम्न्यादरः ।। २५ ।।

तत्तेषामुपपत्तिमत् स वचन श्रुत्वा ततोऽग्रे प्रयान्
मध्येमार्गमुदासितः समजनि स्वे नाम्नि भूयस्तराम् ।
गत्वाऽपश्यदनन्तर पथि पुरो भ्रान्त तदैकं जन
चिन्ताव्याकुलितान्तर सकरुण रोरुद्यमानं चिरात् ।। २६ ।।

अप्राक्षीत् समुपेत्य तं किमिति भो ! रोरुद्यसे त्वं पथि
भ्रान्तोसीत्यवगम्यसे प्रकटय स्पष्टं च नामात्मनः ।
सोऽब्रूताहमिहाध्वनि भ्रममगाम्, अस्म्याख्यया पन्थकः
संबाधे गहने वनेऽतिविषमे पन्था न विज्ञायते ।। २७ ।।

वाक्य तस्य निशम्य पापकबटु. सोत्प्रासमित्यब्रवीद्
हंहो पन्थकनामकेन भवताप्यध्वा कथं विस्मृतः ।
पन्थान प्रति गच्छति प्रतिदिनं जातोऽथवा यः पथि
स्यान् पान्थोऽप्यथ पन्थकः स कथितस्त्वं कीदृशः पन्थकः ।। २८ ।।

व्यक्त्वा रोदनमभ्यधाद् गिरमिमां श्रुत्वा तदीयामसौ
किं त्वं मूढ इवेदृश विसदृश ब्रूषे वचो माणव ।
पान्थः स्यादथ पन्थकश्च पथिकः सर्वस्य मार्गभ्रम.
सभाव्येत, करोतु नाम किमिहापार्थं तदध्वस्मृतौ ॥ २९ ॥

एतत्तस्य वचो निपीय मधुरं स्पष्ट बटुः पापक.
साधीयः स शुभेऽशुभे च विरति नाम्न्यापदात्यन्तिकीम् ।
त्रिर्गत्वा बहिरन्वभून्निजगुरो. सद्युक्तियुक्ता गिर
जातः प्रत्ययितस्ततो निवर्तते मङ्क्ष्वाश्रय स्व प्रति ॥ ३० ॥

तं प्रत्यागतमाश्रम स भगवान् बुद्धो विलोक्यागदीत्
कि भो नाम भवानितो बहिरितः स्वाभीष्टमन्विष्टवान् ?
अन्विष्ट यदि, कथ्यतां द्रुततर कुर्यामिह सत्क्रिया
सन्नामाभिरुचिस्तवाद्य रुचिरा मन्ये चिरात् पूर्यताम् ॥ ३१ ॥

पृष्टोऽसौ गुरुणा प्रणम्य विधिवद् वृत्त तदाऽवर्णयद्
यद्यच्चाप्यवलोकित तदखिलं नामेतिवृत्त स्फुटम् ।
आचार्य ! त्वदुदीरितोऽहमगम नाम्नः प्रकर्षेप्सया
नानाग्रामपुरेष्वलप्सि न पुनस्तन्मात्रयाप्यर्थवत् ॥ ३२ ॥

जीवत्यत्र न जीवकोपि भगवन् ! दृष्टो वृथानामभाग्
दारिद्र्यं धनपालिकापि भजते दृष्टा वृथानामभाक् ।
मार्गं यानपि विस्मरन्नमुमसौ दृष्टो वृथा पन्थकस्
त्रिष्वेतेषु विलोक्य निश्चितमतो नाम्नो वृथात्वं मया ॥ ३३ ॥

प्राक् त्वं मां यदुपादिशः सुबहुशः सन्माणवीनं वचः
सम्यक् सम्प्रति सम्प्रतीत्य मयका तच्छ्रेयसे मन्यते ।
नाहं नाम्न्यतिमात्रमाहितरतिर्भूयो भवाम्याकुलो
नाख्यायाः परिवर्तनश्च भगवन् ! स्वस्याः पुनः कामये ॥ ३४ ॥

ससिद्धिः खलु कर्मणैव कथिता स्यान्नामधेयेन कि
तद् दैवादशुभं शुभं भवतु वा किं तेन मे हीयते ।
पुण्ये कर्मणि तत्परः शुभगुणालङ्कारयुक्तः सदा
स्वीयं मानवजन्म साधु सफलीकर्तुं प्रवर्ते गुरो ॥ ३५ ॥

इत्याख्याय स पापक. स्थिरमति· सच्छात्ररूपो युवा
नाम्नः खेदमुदस्य सम्प्रमुदित. सत्कर्मणि प्रावृतत् ।
श्रीबुद्धस्तु विशुद्धबुद्धिरभितो बुद्ध्वा प्रवृद्धोदय
त शिष्य स शुभाभिराशु बहुभिः स्वाशीर्भिरभ्यार्चिचत् ॥ ३६ ॥

ध्वंसन्ते ते विषमपतिता नोन्नति-कर्तुमीशा-
स्त्यक्त्वा स्वीयं सुकृतमुचित नाम्नि निष्ठां गता ये ।
दोषस्पृष्टे गुणविरहिते पुसि सत्कर्मशून्ये
प्रेष्ठेनापि स्थगितयशसा नामधेयेन किं स्यात् ॥ ३७ ॥

कर्म श्रेष्ठ विमलमतिभिः सर्वदा कार्यमार्यै
सर्वत्रास्मिञ्जगति कथिता कर्मणैवार्थसिद्धिः ।
नार्थो नाम्नाऽशुभमथ शुभं वा भवेत् तन्निकाम
शिक्षाऽऽदेया भवति कथयाऽत्यन्तलघ्व्यानयेति ॥ ३८ ॥

न केवल नामत एव किञ्चित्
प्रयोजनं सिध्यति मानवानाम् ।
अतो विशेषेण गुणाहृताः स्यु-
र्नात्याहृताः सन्तु च नामधेये ॥ ३६ ॥

भवेद्यथा नाम तथा गुणा. स्यु-
रित्यस्ति यद्यप्युदिता प्रसिद्धिः ।
तथापि नात्यन्तमिवाहृतत्वात्
मर्वत्र सा नेति विभावनीयम् ॥ ४० ॥




कथाऽतुलेयं जनयेत् प्रहर्षं
प्रबोधयन्ती सुगुणप्रकर्षम् ।
सद्गुणानां ग्रहणं विधेय
गुणाः प्रधानं, नतु नामधेयम् ॥ ४१ ॥

असुन्दरे वाऽप्यथ सुन्दरे वा
विशेषतो नामनि नावधेयम् ।
गुणप्रकर्षे यतनं विधेयं
ज्ञेयं हि तुच्छं किल नामधेयम् ॥ ४२ ॥

सत्कर्मणा सिद्धिमुपैति नूनं
न नामधेयेन, यतस्तदूनम् ।
नाम ह्युपाधिर्गुणकर्मणी न,
श्रेयोप्यवाप्नोति तयो रतो य. ॥ ४३ ॥

इत्यादि सर्वं भगवान् स बुद्धः
शुद्धोदयो वक्ति वचः प्रबुद्धः ।
लघीयसानेन कथानकेन
प्रदीप्यमानो यशसोन्नतेन ॥ ४४ ॥

(स्वागतावृत्तम्)

यः पवित्रहृदयः सदयः श्री-
बुद्ध आस्त यमिनां पुर एता ।
नामसिद्ध्यभिधमुत्तममेतज्—
जातकं स भगवान् निजगाद ॥ ४५ ॥